THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS

*No. 56.*

—o—

EDITED BY

Mahāmahopādhyāya

GOPĪ NĀTHA KAVIRĀJA, M. A.

---

THE

# BHAGAVAN-NĀMA MĀHĀTMYA-SAṂGRAHA



*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

---

1934

Saleable at half of the printed price.

# भगवन्नाममाहात्म्यसङ्ग्रहः

परमहंसपरिव्राजकरघुनाथेन्द्रयतिसङ्कलितः ।

ाशिकराजकीयप्रधानसंस्कृतपाठशालायां पुराणेतिहासशास्त्राध्याप-
केन फडके इत्युपाख्यानन्तशास्त्रिणा स्वरचितया सुधाख्यटी-
कया पूरकपरिशिष्टादिना च संयोज्य सम्पादितः ।

---

THE

# BHAGAVAN-NĀMA-MĀHĀTMYA-SAṂGRAHA

OF

PARAMAHANSAPARIVRĀJAKA
S'RĪ RAGHUNĀTHENDRA YATI

*Edited with the Sudhā Commentary*

By

PANDIT ANANTA S'ĀSTRĪ PHAḌAKE
Professor of Purāṇa & Itihāsa,
Govt. Sanskrit College,
Benares.

# FOREWORD.

The Purāna and Bhakti Literature are full of high panegyrics on the potency of Divine Name. It is said to be endowed with all the properties which are associated with Divinity itself and is for the weak human soul almost the only way to Release Complicated rituals, elaborate yogic processes, fine discrimination, a well-disciplined moral life, gnostic intuition,true ional fervour and self-abnegation–all these, and other devotmeans of a similar nature, are prescribed in the S'āstras for spiritual advancement, but for a weak aspirant unfit for any of these means the best course is that of taking the Names of God.

The present compilation aims at bringing together such texts from the scriptural literature as have a bearing on the glory and power of the Names of God.

To a modern mind it might appear that the praises attributed to the names of God are superfluous and that the potency claimed for a word, however holy its association, is only a measure of the blind devotion of the soul making the claim But a careful study of the mystical literature of the world,

both ancient and modern, would reveal the fact that all the great religions lay emphasis on the potency of words—special words or sounds—, possessing what are believed to be miraculous properties. The Roman Catholics, the Sufis, the Buddhists, the Jains and all sections of the Hindus, both Vedic and Tantric, recognise the value of sound as an instrument, not only of self-purification but of great spiritual achievements.

The author of Bhaktirasāmrtasindhu has shown that the Name of God is not an ordinary word, which though powerful has its limitations it is instinct with Divine Life and Energy and is incapable of differentiation from the Divinity Itself. There is a distinction between Name ( नाम ) and its Semblance ( नामाभास ). When through the purity of the heart and its constancy the Holy Name reveals Itself the soul is flooded with celestial light and bathed in an ocean of Joy ineffable owing to its relation with Divine Life Such a Name is a power independent of any qualities which the soul may possess and develop and work independently.

The Bhagavannāmakaumudi of Lakshmidhara is a philosophical treatise which deals with the philosophy of Divine Name from different points of view. The curious reader is referred to this work for a reasone

discussion on some of the questions involved. But For a thorough and systematic study of the subject one advised to go through the contents of the Āgamic literature, both S'aiva and S'ākta, as also of the Yoga works of the different schools, and of the Vākyapadīya.

Credit is due to Pandit Ananta Gopal Phadke, Assistant Professor, Government Sanskrit College, Benares for the trouble he has taken in editing the work and preparing an original commentary upon it. It is to be hoped that this booklet, even as it is, will prove generally useful to a student of Bhakti S'āstra.

# भूमिका ।

अथोपक्रम्यते भगवन्नाममाहात्म्यसंग्रहनामकं ग्रन्थं प्रकाशयितुम् । अत्र च ग्रन्थकारेण श्रीभगवन्नारायणशिवरामप्रभृतीनां नाम्नां स्मरणकीर्तनजपादिकानां माहात्म्यबोधकानि श्रुतिस्मृतिपुराणोपपुराणभारतागमसंहितातन्त्रग्रन्थस्थानि वचनानि श्रुतिमूलकत्वेन पुराणस्थनाममाहात्म्यबोधकवाक्यानां प्रामाण्यमित्याद्युपपादनपूर्वकं संगृहीतानि ।

अत्र संगृहीतसकलवाक्यालोचनेनैतन्निश्चितं प्रतीयते यद् भगवन्नामस्मरणजपाद्यतिरिक्तं किमप्यन्यत्साधनं पापरोगादिनाशाय मोक्षाय च नापेक्षत इति । यद्यपि प्राचीनैः श्रेष्ठैर्मन्वादिस्मृतिकारैर्व्यासादिभिर्दार्शनिकैश्च श्रुत्यादिमूलकेनाग्निहोत्राद्यनुष्ठानादिनाऽऽत्मज्ञानादिना च दुःखनाशपूर्वकं परमात्यन्तिकसुखप्राप्तिर्भवतीति निर्णीतं, तथाप्यतिविलक्षणेऽस्मिन्विरञ्चिप्रपञ्च आब्रह्मस्तम्बपर्यन्तं प्राणभृतां लघुनाधिकारिचर्चारहितेनैकरूपेणोपायेनात्यन्तिकसुखप्राप्तिर्नामस्मरणादिना यथा भवति,तथा न तैर्व्यासादिभिर्दर्शनकारैः प्रोक्तोपायैरिति प्रकृतग्रन्थावलोकनेनात्यन्तं सुस्पष्टं भवेत् । उक्तञ्च देवर्षिणा नारदेनापि 'अन्यस्मात्सौलभ्यं भक्तौ' इति । अत्रत्यभक्तिपदेन साधनभक्त्यन्तर्गतं साधनभक्त्यङ्गभूतं नामजपादिकमपि विवक्षितम् । वर्णितं चैतद्धरिभक्तिरसामृतसिन्धौ 'श्रवणं नामचरितगुणादिना श्रुतिर्भवेत्' इत्यादिना । एतच्च वैदिकोपायो नामप्रयोज्यफलप्रयोजक इत्यभिप्रेत्योक्तम् । वस्तुतस्तु, प्रकृतग्रन्थकारसङ्कलितवचनावलोकनेनैतन्निश्चीयते-कलौ नामजपाद्यतिरिक्तसाधनान्ययुगीयानि सर्वथा स्वेष्टं सम्यक् सम्पादयितुमशक्यानीति कलियुगस्थलोकैर्नामजपादिकमेव सर्वाङ्गसम्पूर्णं कर्तुं शक्यमतो नामजपादिकमेव व्यासादिभिर्महर्षिभिर्विहितम् । उक्तञ्च बृहन्नारदीये—

'हरिनामैव नामैव नामैव शरणं मम ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा' इति ।

अन्यत्रापि—

'दानमप्यर्थदोषेण नाम तस्मात्कलौ स्मरेत्' । इति ।

अत्रत्यो विशेषो विचारः (३४) पृष्ठमारभ्य टीकायां द्रष्टव्यः ।

अथात्रायं विचारो मनसि स्वयमेव प्रादुर्भवति यदि भगवन्नामान्येकवारमुच्चरितानि रोगसङ्कटपापनाशकानि सन्ति तदा प्रत्यहमनेकवारमनेकैरुच्चारितान्यपि कुतो न सङ्कटादिकं निवर्तयन्तीति। अत्र शास्त्रकारैरित्थमुत्तरमभिप्रेतम् । सम्पूर्णमपि साधनं तदैव फलमुत्पादयति यदा प्रतिबन्धकेन वर्जितं भवति । यथा कुलादिकानि साधनानि घटोत्पत्तौ प्रतिबन्धकाभावयुतानि । तथा प्रकृतेऽपि नामापराधैर्विनोच्चरितमेव सङ्कटादिनिवर्तकं मोक्षादिदायकं च भवति नान्यथा । सर्वैरनेकवारं नामोच्चार्यत एव परन्तु तदपराधमलिनमतो न तत्फलं ददातीति । उक्तञ्च सात्वततन्त्रे सप्तमपटले—

'तस्मान्नामैकमात्रेण तरत्येव भवार्णवम् ।
पुमानत्र न सन्देहो विना नामापराधतः' ॥ इति

एवं पद्मपुराणे सनत्कुमारेण नारदं प्रत्यप्युक्तम्—

'नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः ।
नाम्नो हि सर्वसुहृदो ह्यपराधात्पतत्यधः' ॥ इति ।

ते चापराधा 'अस्नात्वा स्पर्शनं विष्णोः' इत्यादिना सात्वततन्त्रे 'सतां निन्दा नाम्नः प्रथममपराधं वितनुते' इत्यादिना पद्मपुराणे च सनत्कुमारनारदसंवादे स्पष्टाः । भक्तिशास्त्रकारमहर्षिणा [illegible]नापि 'निमित्तगुणाध्यवसायादपराधेषु व्यवस्था' इत्यादिना प्र[illegible] नामापराधेषु [illegible] इति सूचितम् । एव

[illegible] हरिनाम्नो[illegible] गंगादिनामपूर्वं मोक्षदायकम् ।

[illegible] कथमेतादृशं विलक्षण

सामर्थ्यमिति चेन्न, नाम न परमात्मनो भिन्नं किन्तु परमात्मरूपमेव । उक्तञ्च शिवरहस्ये—

'परब्रह्मेति विज्ञेयं शिव इत्यक्षरद्वयम्'

तथा—

'अव्यक्तं परमं ब्रह्म नैतस्माद् ब्रह्म भिद्यत' इति च ।

श्रीमदाचार्यरूपगोस्वामिना पूज्यपादेन तु 'वाच्यं वाचकमित्युदेति भवतो नाम स्वरूपद्वयम्' इत्यादिना नाम्नो द्वितीयं रूपमेव परमात्मेत्युक्तम् । एवञ्च परमात्मस्वरूपभूतस्याथवा परमात्ममूलरूपस्य तस्य रोगादिनाशकत्वादि फलमवश्यं भवति । श्रूयते च भारतपुराणादिकथानकेष्वनेकवारम् । यथा भारते दुष्टदुःशासनदुःशासितया हस्तिनापुरराजसदसि स्थितया द्रौपद्या—

'गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ।
कौरवैः परिभूतां मां किं न जानासि केशव' ॥

इत्यादिना द्वारकास्थिते कृष्णे नाम्ना प्रार्थिते सति नामैव कृष्णो वा तत्क्षणं वस्त्ररूपेण तत्र प्रादुर्भूय तस्याः सङ्कटं नाशितवानिति सुस्पष्टम् । अत एव बृहद्ब्रह्मसंहितायां वत्सराज्ञोः प्रश्नानन्तरं पार्षदैरुक्तम् ।

'एको नारायणो देवः श्रीमान्कमललोचनः ।
एका च परमा शक्तिः सर्वकार्यकरी हरेः ॥
अनन्तशक्तिसम्पन्ना सा परा परमेश्वरी ।
सन्तिष्ठते सदा तस्मिन्स्वाश्रये पुरुषोत्तमे' ॥
'नित्यानपायिनी शश्वदविभिन्नेव दृश्यते' ।
'सर्गादौ भिद्यते रूपं तयोरेकं द्विधाकृतम् ॥
पञ्चोपनिषदामेकं नादात्मकमथापरम् ।
नादात्मकं तु यद्रूपं तत्तु बीजद्वयात्मकम् ॥
श्रीबीजं प्रणवं चैकं मूलाधारे प्रतिष्ठितम् ।

'प्रणवं पौरुषं बीजं विद्धि तत्त्वत्रयात्मकम्' ।
'प्रणवावयवैः सृष्टिः त्रिविधा द्विजसत्तम' ॥

इत्यादिना महता प्रबन्धेन श्रीपरमात्मन एव स्वरूपं प्रणवाक्षरादिरूपमित्युक्तं सम्यगुपपद्यते । एवं च भगवत्स्वरूपात्मकं नाम यद् वैखर्यां विकृतवर्णसमुदायोच्चरणरूपाभ्यासात्प्रकटरूपं भवति तदैव [illegible]सामर्थ्ययुक्तं सत्सर्वसङ्कटनिवर्तकं भवतीति । अत एव पुराणेष्वनेकवारं नामजपो विहितः क्वचिदेकवारमपीत्युपपद्यते तथानेकवारं यस्य प्राक्तनजन्मसु सुकृतकर्मादिकं नैव जातं तदर्थम् यस्य च प्राक्तनजन्मसु सुकृतकर्मादिकं सम्यक् सञ्जातं तदर्थमेकवार मित्यलं प्रसक्तानुप्रसक्त्या ।

एवञ्च नाम्न्येवोच्चरिते क्रमशः सर्वाण्यपराणि साधनानि स [illegible] परममोक्षदायकं तन्नाम भवति । उक्तञ्च कालीपुराणे—

'विष्णोर्नामैव पुंसः शमलमपनुदत्पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगाद्विरतिमथ गुरुश्रीपदद्वन्द्वभक्तिम् ।
तत्त्वज्ञानं च विष्णोरिह मृतिजननभ्रान्तिबीजं च दग्ध्वा
पूर्णानन्दैकबोधे महति च पुरुषं स्थापयित्वा निवृत्तम्' ॥

सर्वमिदमभिप्रेत्य नाममाहात्म्यबोधकानि वचनान्यनेकप्रसिद्ध प्रसिद्धपुराणादिनानाग्रन्थस्थानि सङ्कलय्य प्रकृतग्रन्थका [illegible] श्रीमन्नारायणेन्द्रयतिर्महदुपकृतवान् ।

तथापि ग्रन्थकारो निजेन जनुषा किं कुलं कं वा देशं कां गौडद [illegible] जातिं कदा भूषयामास परमहंसवृत्तीनां च स्व [illegible] सर्वथा ज्ञातुमशक्यमेव । तथापि ग्रन्थान्तर्गत [illegible] किमपि वक्तुं शक्यते । तद्यथा, अनेन स्व [illegible] 'लक्षणया स्थापयन्ति' इत्यन्त [illegible] (पृ० १०) [illegible] तथा 'भक्तानां चानन्त'

याणगुणविशिष्टं' इत्यारभ्य ( पृ० ३३ ) 'सर्वाभीष्टं प्रयच्छन्ति' इत्यन्तो ग्रन्थः प्रायः श्रीभगवन्नामकौमुदीग्रन्थस्थ—'अंहः संहरद-खिलं' इत्याद्यग्रिमश्लोकव्याख्यानभूतप्रकाशग्रन्थस्थानुपूर्व्यकरूप एव ( भ० कौ० पृ० ४ पं० १६ ), एवं 'प्रतत्ते अद्य शिपिविष्ट' इत्यादिमन्त्रस्तस्य व्याख्यानं च (पृ० १८) प्रकाशानुपूर्व्यैकरूपमेव लिखितम् । (भ० कौ० पृ० १२५ पं० १३) तेनैतन्निश्चितं भवति यद् भगवन्नामकौमुदीटीकाकर्तुरनन्तदेवस्यापदेवसुतस्यानन्तरमेव प्रायः शतवर्षाभ्यन्तरे कालेऽस्य समय आयातीति । अनन्तदेवस्य समयः १६७० ईशवीयोऽन्यैः प्रमाणैर्निश्चितस्तस्मादेतत्कालादनन्तरं १७७० ईशवीयादेतावतः कालात्पूर्वमयं प्रादुर्भूत इत्यनुमीयते । लिपिरस्य ग्रन्थस्य १८०४ ईशवीये ( १८६१ वि० सं० ) काले कृतेति ग्रन्थान्तिमलेखाज्ज्ञायते । पुराणप्रामाण्यस्थापनाय कृतमीमांसाविचारशैल्या श्रुतितद्भाष्यादिप्रदर्शनेन पुराणादिवचनसङ्कलनया चायं मीमांसाधुरन्धरो याज्ञिकप्रवरः पुराणादितन्त्रादिसकलग्रन्थवेत्ता 'रघुनाथेन्द्रयतिना' इत्याद्यन्तिमश्लोकदर्शनेन परमहंसादीक्षाग्रहणानन्तरं प्रकृतग्रन्थस्य कर्ता, 'शिवं कृष्णं विमुक्तय' इतिश्लोकदर्शनेन शिवविष्ण्वभेदवादी चेति ज्ञायते ।

प्रकृतग्रन्थस्थनाममाहात्म्यवचनसङ्ग्रहकल्पना च प्रकृतग्रन्थकारस्य नाममालिकासंज्ञकं ग्रन्थं दृष्ट्वैव जातेत्यपि वक्तुं शक्यते । अथवा तमेव ग्रन्थं प्राथमिकपुराणप्रामाण्यबोधकशास्त्रार्थपूरणेन श्रुत्यादिपूरणेन च पूरितवानिति । यतः प्रकृतग्रन्थे बहुषु स्थलेषु भगवन्नाममालिकास्थानुपूर्वीसमानानुपूर्विकत्वमवलोक्यते । नाममालिकाग्रन्थस्त्वनेकप्राचीनग्रन्थसंग्रहतत्परभक्तप्रवरपण्डितनेपालाभिजनपद्मनाभकेशरिमहोदयेन स्वनिकटस्थितो बहुशः खण्डितः कीटकभक्षितोऽन्विष्य प्रकृतग्रन्थार्धभागमुद्रणावसाने दत्तः, यस्यायमादिमः श्लोकः—

हित्याचार्यविद्वद्वरपूज्यतमपण्डितनारायणशास्त्रिभ्यो लिखितपुस्तकालयाध्यक्षेभ्योऽनेकधन्यवादान्वितरामः ।

तथाऽस्मद्गुरुवराणां राजकीयपाठशालायां व्याकरणादिसकलशास्त्राध्यापकानां मोकाटे इत्युपनामकगणपतिशास्त्रिणां प्रेमयुक्तदययेवायं ग्रन्थः सम्पूर्णो जात इति सादरं विनिवेद्यान्ते येषां कृपाकटाक्षेण विना पदात्पदमपि चलितुं न शक्नोति मानवस्तान्काशीपुरपालकान् श्री १०८ भैरवनाथान् प्रणम्य विद्यारसिका विद्वांसः शुद्धिपत्रदर्शितरीत्याऽशुद्धानि स्थलानि संशोध्यान्यसम्भावितदोषनिरसनपूर्वकगुणग्रहणेन सफलयन्तु मामकीनं परिश्रममिति निवेदयते—



गवर्नमेन्ट संस्कृत कालेज,<br>काशी ।<br>वैक्रमे १९९१ मिते वर्षे आषाढशुद्धपञ्चम्याम् ।

विदुषामनुचरः—<br>**अनन्तशास्त्री फडके**<br>व्याकरणाचार्यो मीमांसातीर्थश्च ।

# अथ भगवन्नाममाहात्म्यसङ्ग्रहस्थविषयानुक्रमणिका।

इति भगवन्नामसंग्रहस्थविषयानुक्रमणिका ।



श्रीगणेशाय नमः ।

रघुनाथेन्द्रयतिसंकलितः—

# भगवन्नाममाहात्म्यसंग्रहः ।



यन्नामकीर्तनादेव सद्यः पापक्षयो भवेत् ॥
तमहं संस्मरामीशं शिवं कृष्णं विमुक्तये ॥ १ ॥

---

श्री १०८ भैरवाय नमः ।

वाराणसीपुरस्थानां पालने लग्नचित्तकम् ।
अभक्तानां भीतिकरं नमामि भैरवं शिवम् ॥ १ ॥
भगवन्नाममाहात्म्यग्रन्थानां सङ्ग्रहे सुधा ।
टीकेयं रच्यते बालबोधायानन्तशास्त्रिणा ॥ २ ॥

अथ प्रकृतग्रन्थप्रतिपाद्यविषयसूचकं श्रुतिबोधितेतिकर्तव्यताकं स्वेष्टदेवतानमस्काररूपं मङ्गलमाचरति ग्रन्थकारः—*यन्नामकीर्तनादेवेति* । एवकारेण कीर्तनेतरमननादिक्रियाव्यावृत्तिः । सद्यःपदेन समयान्तरव्यवच्छेदः । एतेन वह्नेर्दाहकत्वमिव नामकीर्तनमात्रस्य तात्कालिकं स्वाभाविकं पापनाशकत्वं सूचितम्। एतच्चाग्रे स्फुटीभविष्यति । 'विष्णुरुद्रान्तरं यश्च यो ब्रूते मूढधीस्तु सः । रौरवादिषु घोरेषु नरकेषु पतत्यधः' । इतिदोषश्रवणेनोभौ नमस्करोति—*शिवं कृष्णमिति* । अत्र विनापि चकारेण समुच्चयो गम्यते 'देवदत्तो यज्ञद-

ननु नामकीर्तनात्सद्यः पापक्षयप्रतिपादकमन्त्रार्थवादेतिहास-

---

त्तो विष्णुमित्र' इतिवत्। अथवा। 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परब्रह्म कृष्णमित्यभिधीयते'। इतिपुराणवचनेन परब्रह्मवाचकं कृष्णपदं विशेषणम्। तदा परब्रह्मरूपं शिवमित्यर्थः। यद्वा समुद्रमथनोत्पन्नविषप्राशनेन शिवस्य नीलकण्ठत्वेन तदवयवप्राधान्यमुद्दिश्य कृष्णमितिप्रोक्तम्। एवञ्च मत्वर्थीयाच्प्रत्ययान्तं कृष्णपदमिति बोध्यम्। *विमुक्तय इति*। विपदोपादानेनाहैतुकी भगवद्भक्तिरूपैव मुक्तिरिति सूच्यते। न तु 'सालोक्यसार्ष्टिसामीप्यं सारूप्यमेकत्वमप्युत' इत्यत्रोक्तैकापि मुक्तिः, उत्तमभक्तानामनभिप्रेतत्वात्। उक्तञ्च 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः'॥ इति। अत्र पापक्षयविमुक्त्योर्यद्यपि प्रयोज्यप्रयोजकभावो ग्रन्थकारेण न प्रदर्शितस्तथापि पदार्थद्वयप्रदर्शनेन तयोः कार्यकारणभावोऽपि सूचित एव 'अग्निहोत्रं जुहोति। यवागूं पचति' इत्यत्रेवेति ध्येयम्।

*नन्विति*। अयं भावः। सर्वोऽपि वाक्यसमुदायो द्विविधः। कर्तव्यार्थबोधकः, सिद्धार्थबोधकश्चेति। तत्र कर्तव्यार्थबोधक एव शक्तिग्रहस्य सत्त्वेन प्रामाण्यग्रहः, न तु सिद्धार्थबोधके, शक्तिग्रहाभावात्। प्रसिद्धं चैतद्बालकेषु। ते ह्युत्तमवृद्धनिकट उपविश्य मध्यमवृद्धप्रयुक्त 'अश्वमानय' इत्याद्युत्तमवृद्धवाक्यं श्रुत्वा तत्रार्थे तस्य वाक्यस्य शक्तिं गृह्णन्ति, न तु सिद्धार्थबोधकेषु रामादिकथादिषु। एवञ्च शक्तिग्रहमूलकस्य प्रामाण्यस्यापि कार्यबोधके वाक्य एव ग्रह उचितः। सिद्धार्थबोधके शक्तिग्रहाभावेन प्रामाण्यग्रहो न सम्भवति। कदाचित्सिद्धार्थे पश्चाज्जायमानोऽपि शक्तिग्रहोऽसार्वत्रिकत्वात्प्राथमिककार्यान्वितशक्तिग्रहस्यासञ्जातविरोधिन्यायेन बलवत्वाच्च त्यज्यत एव। एवञ्च सिद्धार्थबोधकानां संवादविसंवादरहि-

तानामुपनिषद्वाक्यानां संहितागतमन्त्रवाक्यानां च प्रामाण्यं नास्ति। सिद्धार्थबोधकानां संवादविसंवादयुक्तवेदवाक्यानां तु प्रामाण्यं दूरापास्तम्। वेदमूलकानां पापक्षयो नामसङ्कीर्तनादिना भवतीत्यर्थकानां पुराणवाक्यानां प्रामाण्यकथाचर्चापि नोपपद्यत एवेति प्राभाकरमार्गः।

भट्टपादनये तु सिद्धेऽपि शक्तिग्रहप्रामाण्यग्रहौ भवतः। तथाहि। प्रथमतः शक्तिग्रहो भवतु कार्यबोधके वाक्ये, परन्तु पश्चाच्छक्तिग्रहोऽवश्यं सिद्धार्थेऽपि भवत्येव 'पुत्रस्ते जातो मृतश्च' इत्यादिवाक्ये। तत्रापि 'पश्य नय'इत्यादिकार्यबोधकपदाध्याहारे गौरवमननुगमश्च। अपिचान्यदेशीयभाषानभिज्ञस्य तद्देशे गत्वा कस्य चिद्गृहेऽवस्थितस्य पुरुषस्य तद्गृहे पुत्रजननादि दृष्ट्वा समयान्तरे वार्ताहारेण कथनानन्तरं हर्षोत्फुल्लमुखं जनकमवलोक्यान्यस्य कारणस्याभावेन पुत्रजननवार्ताश्रवणमेवानन्दकारणमित्यवधारयतीति प्रसिद्धः सिद्धार्थेऽपि लोके शक्तिग्रहः। अपिचाद्यव्युत्पत्तिग्रहकाले 'गामानय' इत्यादिसर्वपदानां कार्यान्वितस्वार्थबोधकत्वेऽध्यवसितेऽपि द्वितीयादिप्रयोगेषु कार्यान्वितस्वार्थवाचकत्वस्वीकारस्य नास्त्येवावश्यकता। अन्यथा 'गामानय' इत्यत्र गोपदसमभिव्याहारात्कर्मान्वितस्वार्थबोधकत्वेन द्वितीयाद्यप्रयोगेऽपि कर्मान्वितस्वार्थबोधकत्वापत्तेः। एवं चान्यत्र स्थले यथा कर्मान्वितस्वार्थे शक्तिस्त्यज्यते तथा कार्यान्वितस्वार्थे शक्तिस्त्यज्यतां केवलस्वार्थे च कल्प्यताम्। किञ्चाद्यव्युत्पत्तिग्रहकाले कर्तव्यबोधकलिङादिघटितशब्दसत्त्वेऽपि सर्वथा सिद्धार्थबोधके 'पुत्रस्ते जात' इत्यादौ कर्तव्यताबोधकलिङादेर्नाध्याहारः। अन्यथाऽऽद्यव्युत्पत्तिग्रहकाले 'दण्डेन गामानय'इत्यादिषु करणस्य श्रवणेन घटोऽस्तीत्यादावपि करणाध्याहारापत्तिः। अथ तत्र न करणाद्यध्याह्रियते तादृशाकाङ्क्षाया अभावादिति चेत्तर्हि तत्रापि सिद्धार्थबोधके वाक्ये मास्तु कार्याध्याहारः, तादृशाकाङ्क्षाया अभावा-

पुराणोपपुराणसंहितागमादीनां कर्मानुष्ठानादिपराणां स्वार्थेऽपि प्रामाण्यं नास्तीतिचेत्(किं)मानान्तरसंवादिविसंवादिवाक्यानां "अग्नि-र्हिमस्य भेषजम्" "स प्रजापतिरात्मनो वपामुदखिदत्" "यजमानः प्रस्तरः" इत्यादीनामिवाप्रामाण्यं स्वार्थे, उत मानान्तरसंवादविसं-

---

दिति समानम्। एवञ्च सिद्धार्थे 'इन्द्रो वृत्राय वज्रमुदयच्छत्' "वज्र हस्तः पुरन्दरः" इत्यादिषु शक्तिग्रहवारणं ब्रह्मणाऽपि न कर्तुं शक्यत इत्यलम्। पूर्वमतेनाद्य पक्षं द्वितीयमतेन च परिहारं मनसि निधाय वक्ष्यति—*द्वितीयस्तु न सम्भवतीति*।

*मन्त्रा.* प्रसिद्धवैदिकसंहिताभागः। *अर्थवादः* प्राश-स्त्यनिन्दाबोधक वाक्यम्। *इतिहासो* भारतादिकः। *पुराणानि* ब्रह्मादीन्यष्टादश। *उपपुराणानि* नृसिंहपुराणप्रभृतीनि। *सं-हिताः* सात्वतसंहिताकात्यायनसंहिताप्रभृतयः। *आगमाः* त-न्त्राणि। आदिपदेन रहस्यादीनि ग्राह्याणि। *मानान्तरसंवादः* स्वेतरप्रमाणगोचरबोधनम्। *विसंवादः* स्वेतरप्रमाणविरुद्ध-बोधनम्। 'अग्निर्हिमस्य भेषजम्' इत्यादिषु प्रत्यक्षादिप्रमाणगम्य-स्याग्नेर्हिमनाशकत्वस्य बोधनेनानुवादकत्वम्। स्वीयवपोत्खेदन-स्य, यजमानस्य प्रस्तरत्वबोधनस्य च प्रत्यक्षादिप्रमाणविरोधेन बाधितत्वम्। यद्यपि कदाचित्स्वीयवपोत्खेदनं सम्भवेत् परन्त्वग्रेऽ-स्य वाक्यस्य शेषभूतं 'तामग्नौप्रागृह्णात्। ततोऽजस्तूपर उदगात्। त-मालभ्य प्रजाः प्राप्नोति' इत्याकारक वाक्य विद्यते, वपोत्खेदनस्यान न्तरमग्नौ प्रक्षेपणस्य च सर्वथा बाधितत्वमेव मन्तव्यम्। प्रा-माण्यस्य बाधानास्कन्दितानधिगतार्थविषयकबोधजनकत्वेन 'अग्नि-र्हिमस्य भेषजम्' इत्यादीनां 'प्रजापतिर्वपामुदखिदत्' इत्यादीनाञ्च हिमनाशकोऽग्नि, स्वीयवपोत्खेदनपूर्वकहोमकर्ता प्रजापतिरित्या-

वादरहितानामपि । आद्ये इष्टापत्तिः । द्वितीयस्तु न सम्भवति । तादृशवाक्यानां स्वार्थेऽवान्तरतात्पर्यस्य देवताधिकरणादौ ( वै० अ० १ पा० ३ सू० २६ ) व्यासादिभिर्भाष्यकारादिभिश्चाङ्गीकृ-

---

दिस्वार्थस्वीकारे प्रत्यक्षादिना सिद्धाद् बाधाच्चाप्रामाण्यम् । आद्यपक्ष इष्टापत्त्या परिहरति-*आद्ये इष्टेति* । मीमांसकैरपि स्वार्थे प्रामाण्यं न स्वीक्रियतेऽस्माभिरपि न स्वीक्रियते, किन्तु विधेस्तावकत्वादिना । स्पष्टं चेदं 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति जैमिनिसूत्रे 'कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदखिददित्याह । उच्यते । असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्' इत्यादिना शावरभाष्यादिषु च । *तादृशवाक्यानामिति* । मानान्तरसंवादविसंवादरहितानाम् । यथा 'वज्रहस्तः पुरन्दरः' इत्यादीनाम् ।

*देवताधिकरणादाविति* । तत्र हि मनुष्याणामिव देवतानामपि ब्रह्मज्ञानेऽधिकारोऽस्ति नवेति विचारप्रसङ्गेन 'तदुपर्यपि वादरायणः सम्भवात्' (१।३।२६) इति सूत्रेण श्रीमता वादरायणेन व्यासेन देवानामपि ब्रह्मविद्यायामधिकारोऽस्तीत्युक्तम् । अत्रत्यादिपदेन संकर्षणकाण्डीयजैमिन्याचार्यमतग्रहणम् । *भाष्यकारादिभिश्चेति* । तैर्हि तत्रोक्तम् । 'तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमितिवादरायण आचार्यो मन्यते । कस्मात्सम्भवात् । सम्भवति हि तेषामर्थित्वाद्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि सम्भवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम । तथा सामर्थ्यमपि तेषां सम्भवति । मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात्' इत्यादिकम् । भाष्यकारादिभिश्चेत्यत्रत्यादिपदेन भामतीकारादयो ग्राह्याः ।

तत्वात्, भट्टाचार्यैश्च "अथवा मन्त्रार्थवादेतिहासपुराणप्रामाण्या-त्सृष्टिप्रलयावपीष्येते" इत्यादिग्रन्थेन मन्त्रार्थवादादीनां प्रामाण्य-स्वीकाराच्च, (जै० तन्त्र० अ० १ पा० ३ सू० १० ) 'मन्त्रार्थ-

---

*अथवेति* । एषा च पङ्क्तिरर्थवादाधिकरणे 'गुणवादस्तु' (१।२।१०) इत्यस्मिन्सूत्रीये तन्त्ररत्ने विद्यते। तत्र हि 'अर्थवादास्तु किञ्चिदालम्बनं स्वीकृत्यासत्यत्वेन प्ररोचयन्ति न तद्गतसत्यासत्यत्वेन किञ्चिद्दूष्यते' इत्युपक्रम्य-'प्रजापतिरात्मनो वपामुदखिदत्' अस्यार्थवादस्य प्रजापतिशब्देन महाभूतानि वपाशब्देन च वृष्ट्यादिकमित्यर्थवर्णनं कृत्वा ततोऽस्मिन्पक्षे स्तुतित्वमेव हीयत इति मत्वा प्रजापतिस्तु कश्चिद्देहधारी यज्ञकर्त्ता एव पुरुष इत्यङ्गीकरणे हेतुभूतरूपेणेयमुक्ता। मुद्रितपुस्तके 'सृष्टिप्रलयावपीष्येते' इत्य-त्रापिशद्बो नोपलभ्यते, परन्तु स अत्यावश्यकः, सृष्टिप्रलया-तिरिक्तानां सर्वेषां ग्रहणार्थम्। भगवन्नामकौमुद्या'मपि'घटितमेवेदं वाक्यमुपलभ्यते। तन्त्ररत्नस्थः प्रकृतोपयोगी ग्रन्थश्चेत्थम्-'स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः। मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टिप्रलयावपीष्येते। तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मि-न्काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात्स्वमाहात्म्येनात्मन एव पशुरूपमभिनिर्माय वपोत्खनादिकृतवास्ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम्। एवं च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव' इति। *मन्त्रार्थवादयोरिति*। यथा संहितान्तर्गतमन्त्राणां कर्मणि करणत्व, यतः समन्त्रकक्रियाया एव सफलत्वात्। तथा स्वघटकशब्दार्थबोधनत्वमपि। एवमर्थवादाना-मपि। तयो. प्रामाण्य नास्तीति कथनेऽपि दोषोत्पत्तिं नहुषराजदृष्टा-न्तेन स्पष्टयति *नहुषस्येति*।

तथाहि श्रीमन्महाभारत उद्योगपर्वणि सप्तदशाध्याये—

ऋषयस्तु परिश्रान्ता वाह्यमाना दुरात्मना ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥
पप्रच्छुः संशयं ते तु नहुषं पापचेतसम् ।
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ॥
एते प्रमाणं भवत उताहो नेति वासव ।
नहुषो नेति तानाह सहसा मूढचेतनः ॥

ऋषय ऊचुः—

अधर्मे सम्प्रवृत्तस्त्वं धर्मं च विजिघृक्षसि ।
प्रमाणमेतदस्माकं पूर्वैः प्रोक्तं महर्षिभिः ॥

अगस्त्यः—

ततो विवदमानस्सन् ऋषिभिः सह पार्थिवः ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥
तेनाभूद्धतचेतास्स निश्रीकश्च शचीपते ।
ततस्तमहमुद्विग्नमवोचं भयपीडितम् ॥
यस्मात्पूर्वैः कृतं मार्गं महर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशःपदा ॥
यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् ।
वाहान् कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥
ध्वंस स्वपापपरिभ्रष्टः क्षीणपुण्यो महीपते ।
दशवर्षसहस्राणि सर्परूपधरो महीम् ॥
विचरिष्यसि तीर्णश्च पुनः स्वर्गमवाप्स्यसि । इत्यादिकम् ॥

कात्यायनसंहितायामपि—

अर्थवादो हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥ इति ।

पादयोः स्वार्थे प्रामाण्यं नास्ति' इति वदतो नहुषस्यानर्थप्राप्तिदर्शनाच्च, ( भार० उ० अ० १७ ) नामकीर्तनात्पापक्षयप्रतिपादकवाक्यानामपि मानान्तरसंवादविसंवादयोरभावात्स्वार्थेऽपि प्रामाण्यं स्वीकर्त्तव्यमेव। भाष्यकारैश्च सहस्रनामभाष्ये "द्यौः सचन्द्रार्कनक्षत्रा" ( वि० स० ना० श्लो० १३४ ) इत्यादिना स्तुत्यस्य वासुदेवस्य माहात्म्यकथनेनोक्तानां फलानां प्राप्तिवचनं यथार्थकथनं नार्थवाद इति व्यासो दर्शयति" इति भाष्येण भगन्नामकीर्तनफलवचनानां प्रामाण्यदर्शनाच्च। अन्यथानर्थप्राप्तिरेव। उक्तं च नारदीये—

अहो हि वाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते।
उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेति तथार्थवादः ॥इति।

---

अर्थवाद इत्युपलक्षणमप्रामाण्यस्यापि। #भाष्यकारैश्चेति#। शङ्कराचार्यैः। #सहस्रनामभाष्ये#। विष्णुसहस्रनामभाष्ये। #द्यौःसचन्द्रार्केति#। सम्पूर्णश्लोकश्च 'द्यौः सचन्द्रार्कनक्षत्रा खं दिशोभूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः' (१३४)। #व्यासो दर्शयतीति#। व्यासपदं नास्ति भाष्ये। #उक्तानां फलानामिति#। 'यश. प्राप्नोति विपुलं' इत्याद्यष्टश्लोकोक्तानामित्यर्थः। एवञ्च विसंवादादियुतानां मास्तु स्वार्थे प्रामाण्यं परन्तु, तद्रहितानां स्वार्थे प्रामाण्यस्वीकारे न काचिदप्यनुपपत्तिरित्याह-#नामकीर्तनेत्यादि# । #अन्यथेति#। प्रामाण्यास्वीकारेणार्थवादत्वकथनेन च। #चतुरक्षरे इति#। नारायणेति—अर्थवादेति च पदद्वय वर्णचतुष्टयघटितम्। #निदानमिति#। आदिकारणम्। #मुनीन्द्रा इति# सम्बोधनविभक्त्यन्तम्।

अथ सर्वत्र मन्त्राणामर्थवादानां च स्वार्थेऽपि तात्पर्यवर्णनमशा-

ब्रह्मसंहितायामपि नामकीर्तनप्रस्तावे बौधायनं प्रति श्रीकृष्णः—

मन्नामकीर्तनफलं विविधं निशम्य
न श्रद्दधाति मनुते यदुतार्थवादम् ।
यो मानुषस्तमहं दुःखचये क्षिपामि
संसारघोरविविधार्तिनिपीडिताङ्गम् ॥ इति ।

कात्यायनसंहितायां—

अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां नरके पतति स्फुटम् ॥ इति ।

---

क्यमेव । तथाहि । 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता' इत्यादिमन्त्रेण एकैवादितिर्द्यौरिति बोध्यतेऽन्तरिक्षमित्यपि, एतच्चैकस्या असम्भवि । तथा 'एक एव रुद्रोऽवतस्थे न द्वितीयः', एवमन्यत्र 'असङ्ख्याताः सहस्राणि ये रुद्राधिभूम्याम्' इति रुद्रस्यैकत्वकथनमसङ्ख्यातत्वकथनञ्चासम्भवि । एवञ्च मन्त्रार्थवादानां क्वचित् स्वार्थे प्रामाण्यं नास्तीति कथनमावश्यकमेव । एवञ्चैतावन्मात्रकथनेन कथमनर्थप्राप्तिर्भवति । श्रीमन्महाभारतीयनहुषराजाख्यानमपि न विरोधि । ननु 'य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् । एते प्रमाणं भवत उताहो नेति वासव । नहुषो नेति तानाह सहसा मूढचेतनः' ॥ इत्यादिप्रश्नोत्तरपर्यालोचनया ऋषिभिर्गवां प्रोक्षणविषयकेषु मन्त्रेषु प्रामाण्ये पृष्टे नहुषेण तद्विषयक एव प्रामाण्याभाव उक्ते तत्फलं न तु सर्वमन्त्रेषु । अनयोः प्रश्नोत्तरयोः सर्वमन्त्रविषयकत्वेनोदाहरणस्योपलक्षणत्व-स्वीकारेऽपि 'एते प्रमाणं भवतः' 'नेति तानाह' इत्यादिवाक्यपर्यालोचनया सर्वथाऽप्रामाण्यस्वीकार एवानर्थोत्पत्तिरित्यवश्यं कल्पनीयम्, अन्यथा सर्वाण्यप्यर्थवादविषयकाण्यधिकरणान्यसङ्गतानि स्युः, अधिकमुपरिष्टाद्विविच्यते । एवञ्च

किञ्च, यथा विधायकब्राह्मणश्रुतिमूलकानां मन्वत्रिवसिष्ठबौधायनापस्तम्बादिस्मृतीनामनुष्ठेयेऽग्निहोत्रादौ प्रामाण्यम् , एवं प्रत्यक्षविधायकब्राह्मणश्रुतिमूलकानां नामकीर्तनात्पापक्षयमोक्षादिप्राप्तिवचनानामपि । जाबालब्राह्मणम्—

---

विचारकाणां नैतत् सम्यक् प्रतिभातीत्यरुचेराह—*किञ्चेति* ।

*यथा विधायकेति* । मीमांसकैस्स्मृतीनां प्रामाण्यस्य विचारप्रसङ्गेनेदं सिद्धान्तितम् , यत्र प्रत्यक्षतो नोपलभ्यते समग्रं श्रुतिवचनं तत्र स्मृतिस्तद्वचनसम्बद्धसम्पूर्णार्थबोधिकेति सा प्रमाणम् । यथा 'अष्टकाः कुर्यात्' इत्यादिविधिर्वेदेषूपलभ्यमावेऽपि 'यां जनाः प्रतिनन्दन्ति' इत्यष्टकाश्राद्धाङ्गमन्त्रोपलब्धेस्तन्मन्त्रसहितसम्पूर्णश्राद्धबोधिका 'अष्टकाः कर्तव्या' इत्यादिस्मृतिस्सर्वथा प्रमाणम् । तथा यत्र प्रत्यक्षं श्रुतिवचनं नोपलभ्यते, तत्र स्मृत्या श्रुतिं कल्पयित्वा तन्मूलकत्वेन स्मृतीनां सर्वथा स्वविषये प्रामाण्यम् । यथा याज्ञवल्क्यादिस्मृतीनां स्वबोध्यग्रहयागादिषु । एवं यत्र प्रत्यक्षश्रुतिवचनमुपलभ्यते स्मृत्यादयश्च विरुद्धार्थबोधिकास्तत्र स्मृत्यादीनामप्रामाण्यम् । यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इतिश्रुतिविरुद्धस्य 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यर्थस्य बोधिकानाम् । यत्र वा लोभादिरूपहेत्वादिरुपलभ्यते तत्राप्यप्रामाण्यम् । यथा 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इत्यादीनां लोभमूलप्रवृत्तानाम् । एवञ्चोक्तसर्वप्रामाण्यापवादकहेतुरहितानां 'अग्निहोत्रं जुहोति' इति प्रत्यक्षविधिमूलकानां मन्वादिवचनानामनुष्ठेयेऽर्थे यथा प्रामाण्यं स्वीक्रियते, तथा प्रत्यक्षब्राह्मणश्रुतिमूलकानां नामसङ्कीर्तनात्पापक्षयमोक्षादिप्राप्तिवचनानामपि प्रामाण्यं स्वीकर्तव्यमेवेत्यभिप्रायः ।

नामकीर्तनात्पापक्षयो भवतीति प्रतिपादकानां पुराणादीनां प्रामाण्यबोधनाय पूर्वं ब्राह्मणरूपश्रुतीः प्रदर्शयति—*जाबालब्राह्म-

अथ हैनं ब्रह्मचारिण ऊचुः । किं जप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः । शतरुद्रीयेणेत्येतानि ह वा अमृतस्य नामधेयान्येतैर्ह वा अमृतो भवति । ( जा० उ० खं० ३ )

इति शतरुद्रीयसंज्ञितशिवनाम्नां मोक्षसाधनज्ञानसाधनत्वं दर्शयति । कैवल्यब्राह्मणं च—

यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति ब्रह्महत्यायाः पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमा-

---

णम्* इत्यादि । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति बौधायनवचनेन मन्त्रब्राह्मणरूपवेदद्वैविध्ये मन्त्रभिन्नस्य सम्पूर्णस्योपनिषदादिसहितस्य वेदभागस्य ब्राह्मणपदेन ग्रहणं मत्वा जाबालब्राह्मणमित्युक्तम् । एतच्च ब्राह्मणं शुक्लयजुर्वेदीयजाबालोपनिषन्नाम्ना प्रसिद्धम् । *किं जप्येनेति* । केन जपयोग्येनेत्यर्थः। अथवा समस्तं पदम् । *एतानि हवेति* । ह वेति निश्चये । *अमृत* इति। मुक्त इत्यर्थः । *मोक्षसाधनज्ञानसाधनत्वमिति* । मोक्षस्य साधनं यद्ज्ञानं तत्साधनत्वं नाम्नामित्यर्थः । 'ज्ञानादेव तु कैवल्यम्' 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इत्यादिश्रुतिस्मृतिभ्यः । अथवा 'अमृतस्य नामधेयान्येतैर्ह वा अमृतो भवति' । 'सदा सकृद्वा जपेदनेन ज्ञानमाप्नोति संसारार्णवनाशनम्' इत्यादिजाबालकैवल्यब्राह्मणादिपर्यालोचनया मोक्षस्य साधनत्वं ज्ञानस्य साधनत्वं चेत्यर्थः । *कैवल्यब्राह्मणम्* इति । एतच्चाथर्ववेदीयं कैवल्योपनिषन्नाम्ना प्रसिद्धम् ।

*यःशतरुद्रीयमिति* । शतरुद्रीयसंज्ञितनामसमुदायम् । *अग्निपूत इति* । अग्निवत्पूत इत्यर्थः । 'शुचिरग्निः शुचिः कविः' इतिश्रुतेः । अथवाऽग्निपूतवद्भवतीत्यर्थः । *कृत्याकृत्यादिति* । कृत्यात्-सुवर्ण-

अतो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेदनेन ज्ञानमाप्नोति संसा
रार्णवनाशनम् । ( कै० उ० ख० २ मं० २४ )

इति शतरुद्रीयनामसमुदायस्य ब्रह्महत्यासुरापानादिसमस्तपाप
क्षयद्वारा संसारमोचकज्ञानसाधनत्वं दर्शयति ।

कठब्राह्मणं जाबालब्राह्मणं च—

अथ चाण्डालः शिव इति वाचं वदेत्तेन सह संवदेत्तेन स
संवसेत्तेन सह भुञ्जीत ।

इति शिवनाम्नः परमपावनत्वं दर्शयति । किञ्च—

द्वापरान्ते नारदो ब्रह्माणं प्रति जगाम, कथं नु भगवन् गां प
र्यटन्कलिं सन्तरामीति । सहोवाच साधु पृष्टोऽस्मि सर्वश्रुतिरहस्य
गोप्यं तच्छृणु येन कलिं सन्तरिष्यसि । भगवतो विष्णोर्नारायणस्य
नाम्नेति । नारदः पुनः पप्रच्छ, भगवन् किं तन्नामेति । स
होवाच । हरे राम हरे राम राम रामहरे हरे । हरे कृष्ण हरे कृष्ण
कृष्ण कृष्ण हरे हरे ॥ इति षोडशकं नाम्नां कलिकल्मषनाशनम् ।
नातः परतरोपायः सर्ववेदेषु दृश्यते ॥ इति षोडशकलावृतस्य जीव

---

स्तेयकृत्यात् । अकृत्यात्-गुर्वङ्गनागमनादिरूपादित्यर्थः, ब्रह्महत्यादि
साहचर्यात् । अथवा कृत्यात्-अन्यजन्मनि भोगोत्पादकक्रियोत्पन्नस
स्कारात् । अकृत्यात्-ब्रह्महत्याद्यतिरिक्तपापादित्यर्थः । *अत्याश्रमी
ति* । सर्वाश्रमाद्बहिर्भूतः । *अथचाण्डालेति* । अत्र यत्पदसम्ब
न्धकरणेन यश्चाण्डालः शिव इति वाचं वदति तेन सह संवासादि
करणेऽपि दोषो नास्तीति शिवनामोच्चारणस्य माहात्म्यं गम्यते । इद
वचनं बहुशान्वेषितमपि नोपलब्धम् । *द्वापरान्ते नारद* इत्यादि

स्यावरणविनाशनम् । ततः प्रकाशते परं ब्रह्म मेघापाये रविरश्मिरिवेति । पुनर्नारदः पप्रच्छ, भगवन्कोस्य विधिरिति । स होवाच, नास्य विधिरिति सर्वदा शुचिरशुचिर्वा पठन्ब्राह्मणः सलोकतां समीपतां सरूपतां सायुज्यतामेति । यदास्य षोडशकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यायास्तरति वीरहत्यायाः सुवर्णस्तेयाद्वृषलीगमनात् पित्रोर्देवानामृषीणां मनुष्याणामृणानपाकरणात्सर्वधर्मपरित्यागपापात्सद्यः शुचितामाप्नुयात्सद्यो मुच्यते सद्यो मुच्यते इति अथर्वणनामोपनिषत् । ( कलि० सं० उ० )

इति ब्राह्मणमपि विष्णुनाम्नां समस्तपापक्षयकलिसन्तरणद्वारा सायुज्यादिफलसाधनत्वं दर्शयति ।

---

*सर्वदेति* । एतत्पदं 'पठन्' इत्यनेनान्वेति । सर्वदा पठतोऽपि सकामस्यैव कामानुकूलः सलोकतादिमुक्तिलाभ इति ज्ञेयम् । *सलोकतामिति*। ईश्वरेण सहैकस्मिन्लोके वासम् । *समीपताम्*। ईश्वरनिकटवर्तित्वम् । *सायुज्यताम्* । एकत्वम् । *सद्यो मुच्यते इति* । पूर्वोक्तपापेभ्य इति शेषः। अथवा सद्यः-शुचिताप्राप्त्यनन्तरक्षणे सर्वदाजपेन यथाकामं सलोकतादिमुक्तिं प्राप्नोतीत्यर्थः । *सद्यो मुच्यत इति* । पदस्य द्विरुक्तिरुपनिषत्समाप्तिसूचनार्था । *अथर्वणनामोपनिषदिति* । नैवोपलभ्यते कलिसन्तरणनामकप्रकृतोपनिषदीदं वाक्यम्, प्रत्युत मुक्तिकोपनिषदीय-'पञ्चब्रह्मप्राणाग्निहोत्रवराहकलिसन्तरणसरस्वतीरहस्यानां कृष्णयजुर्वेदगतानाम्' इत्यादिवाक्यपर्यालोचनया कृष्णयजुर्वेदीयमिति गम्यते । प्रायो 'द्वापर' इत्येतत्सम्पूर्णवाक्यजातं कलिसन्तरणोपनिषदेव । *विष्णुनाम्नामिति* । विष्णुवर्धप्रतिपादकानां हरिरामकृष्णनाम्नाम् । न तु केवलं 'विष्णु' इत्याका-

किञ्च "वसन्ताय कपिञ्जलानालभते"(शु०य०सं०२४।२०) "ध-

---

रकनाम्नः। अत एव 'नाम्नाम्' इति बहुवचनमुपलभ्यते। अथ नामस्मरणस्य कथं सर्वपातकनाशकत्वं, कथं वा मुक्तिप्रदापकत्वं, ईश्वरस्य नाम्नाञ्च कः सम्बन्ध इत्यादि सर्वमप्युरिष्टाद्विविच्यते।

एवं नामसङ्कीर्तनात्पापक्षयज्ञानमोक्षादिप्राप्तिर्भवतीति प्रतिपादकानां पुराणवचनानां प्रामाण्य बोधयितुं ब्राह्मणवचनानामुपन्यासः कृतः, एवं नाममाहात्म्यप्रतिपादकऋग्वेदादिमन्त्रेभ्योऽपि कात्यायनादिस्मृतिमहाभारतपुराणादीनां प्रामाण्यं स्वीकर्तव्यमिति बोधनार्थं मन्त्रान्प्रदर्शयिष्यमाण आह—*किञ्चेति*। *वसन्ताय कपिञ्जलानालभते इति*। अत्रायं पूर्वमीमांसकानां सिद्धान्तः। सूत्रस्मृत्यादिषूपलभ्यमानानां 'वसन्ताय कपिञ्जलानालभते' 'प्रपाःप्रवर्तयितव्या' 'अष्टकाः कर्तव्याः' इत्यादीनां वचनानां प्रामाण्यविचारे विधायकवैदिकवचनानुपलम्भादेतेषां पुरुषप्रणीतत्वेन भ्रान्त्यादिहेतुकाप्रामाण्यसम्भवाच्च 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्' (जै० १।३।१) इति सूत्रेणाप्रामाण्यमेवेति पूर्वपक्षे 'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्' (जै० १।३।२) इतिसिद्धान्तसूत्रेण विधायकवैदिकवचनानुपलम्भेऽपि वैदिकमन्वादिप्रणीतत्वेन, कर्मसत्ताबोधकवेदवचनोपलम्भेन, क्वचित्कर्माङ्गमन्त्रस्योपलम्भेन, क्वचिदुपमानरूपसूचकस्योपलम्भेन, क्वचिद्दृष्टार्थतया च प्रामाण्यमेवेति। स्पष्टञ्चेदं शावरभाष्यादिषु 'अथेदानीं न वैदिकं शब्दमुपलभेमहि। अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्य एतस्मै प्रयोजनायेति। किमसौ तथैव स्यान्नेति। यथा अष्टकाः कर्तव्याः', प्रपा प्रवर्तयितव्या। शब्दलक्षणो धर्म इत्युक्तमतो निर्मूलत्वान्नापेक्षितव्यम्' इतिपूर्वपक्षे, 'प्रमाणं स्मृतिः। विज्ञानं हि तत्, किमित्यन्यथा भविष्यति'''ग्रन्थस्त्वनुमीयते। कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोः। अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते। यां

न्वन्निव प्रपा असि" (ऋ० अ० ७ अ० ५ व० ३२) इत्यादिमन्त्रमूलकानां कपिञ्जलालम्भनप्रपादिकर्तव्यताबोधकापस्तम्बादिस्मृतीनां प्रामाण्यं यथा, एवमृग्वेदादिमन्त्रमूलकानां नामकीर्तनात्पापक्षयादिसकलपुरुषार्थसिद्धिबोधकच्यवनयाज्ञवल्क्यकात्यायनादिस्मृतीनां महाभारतादीतिहासपुराणोपपुराणागमादीनामपि प्रामा-

---

जनाः प्रतिनन्दन्ति' इत्येवमादयः । प्रपास्तडागानि च परोपकाराय । तथा च दर्शनं 'धन्वन्निव प्रपा असि' इति......तेन ये दृष्टार्थास्ते तत एव प्रमाणं, ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानम्' इत्यादिना ।

*धन्वन्निति* । सम्पूर्णमन्त्रस्तदर्थस्तु-प्रते यक्षि प्रत इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु । धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥ (ऋ० अष्ट० ७ अ० ५ व० ३२) हे अग्ने, तुभ्यं हविः प्रयक्षि-प्रयच्छामि, यजिर्दानार्थः । तथा मन्म-मननीयां स्तुतिं, ते-त्वदर्थं, प्रेयर्मि-प्रेरयामि प्रोच्चारयामीत्यर्थः । वन्द्यः -सर्वैर्वन्दनीयस्त्वं, नो-अस्मदीयेषु, हवेषु-देवाह्वानेषु, यथा त्वं सन्निहितो भुवः-भवसि, तथा हविः प्रयच्छामि स्तोमि च । हे प्रत्न— पुराण, राजन्-सर्वस्य जगतः स्वामिन्, हे अग्ने, स त्वं इयक्षवे-यष्टुमिच्छते, पूरवे-मनुष्याय यजमानाय, पुरिति मनुष्यनाम । हविर्भिर्देवान् पूरयित्रे जनायेत्यर्थः । धन्वन्निव प्रपा असि । यथा धन्वन्— धन्वनि मरौ निरूदकप्रदेश इत्यर्थः । प्रपा-प्रपिबन्त्यत्रेति प्रपा, सा यथोदकप्रदानेन जनेभ्यः सुखदा भवति, एवं त्वं धनदानेन तस्मै यजमानाय सुखदाता भवसीति ।

ननु मन्त्रेषु भावनावाचकशब्दघटितेषु विधायकत्वं नास्त्येव । यतस्ते कर्मसु कर्मस्मरणार्थतया करणत्वेनोपयुक्ताः । एकस्योभयकरणत्वञ्चाशक्यमेव । उक्तञ्च 'तस्मात्प्रकाशका मन्त्रा' इति । 'यस्माद् व्रीह्या-

यम् । मन्त्राणामनुष्ठेयार्थस्मरणेऽपि विधायकत्वमस्त्येव । तदुक्तं—

विधिशक्तिर्न मन्त्रस्य नियोगेनानुहीयते ।
स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥
( जै० तं० २।१।३० ) इति ।

नियोगात्—विनियोगात् । मन्त्रास्तु दर्श्यन्ते—

तमुस्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्त्तन ।
आस्य जानन्तो नाम चिद्विवक्त नमस्ते विष्णो सुमतिं भजामहे ॥
( ऋ. सं. अ. २ अ. २ व. २६ )

---

दिवन्मन्त्राः करणत्वेन कर्मणाम् । ब्राह्मणेन विनियुज्यन्ते तद्वत्ते न वि-
धायकाः' ॥ इति चेत्यत आह-*मन्त्राणामनुष्ठेयार्थस्मरणेपि *इत्यादि। विधिशक्तिर्न मन्त्रस्य' इति तन्त्रवार्तिक 'विधिमन्त्रयोरैकार्थ्यमैक शब्द्यात्' इति सूत्रे विद्यते । विनियोगादित्यत्र कर्मस्विति शेषः । अयं भावः । मन्त्रे विद्यमानानामाख्यातशब्दानां विधिशक्तिस्तिरोधीयते ब्राह्मणस्थितानां त्वाविर्भवतीति कथं विना हेतुमवगन्तुं शक्यते । वि-परीतं वा मन्त्राख्यातं विधायकं ब्राह्मणगत स्मारकमिति कुतो न । अपि च, कर्मसु स्मरणार्थेन वचनेन न विधातव्यमिति नास्ति नियमः। एकस्योभयकरणत्वं तु दृश्यते शतशो लोके, जलपूरितघटो जलधार-को भवति मङ्गलकारकोऽपि । श्रुतमात्रोऽथशब्दो मङ्गलार्थो भवति, श-क्त्याऽऽनन्तर्याद्यर्थवाचकोऽपि । अपि च यथा स्मारकमन्त्राभावस्थले विधायकस्यापि ब्राह्मणवचनस्यैव स्मारकत्वमङ्गीक्रियते, तथा मन्त्रेऽ-प्यस्तु का हानिः । उक्तञ्च तन्त्रवार्तिके 'विधायकं सदप्यर्थं ब्राह्मण-स्मारयिष्यति' । मीमांसान्यायप्रकाशेऽपि मन्त्राणां स्मारकत्वविचार-प्रसङ्गे 'यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णीं विहितेषु कर्मसु,

इति हि श्रूयते दीर्घतमसो वाक्यमेतत्। अयं मन्त्रो जगदुपादानस्य जगत्कर्तुर्वेदान्तवेद्यस्य स्वप्रकाशस्य मत्स्याद्यनेकावतारयुक्तस्य विष्णोः स्तोत्रस्य नाम्नां च मोक्षसाधनीभूतज्ञानसाधनत्वं दर्शयति। मन्त्राक्षरार्थस्तु—उकारश्छन्दःपूरणार्थः, हे जानन्तः—स्वार्थकुशला जनाः, तं देवं—अस्ति कश्चिदीश्वर इत्याबालगोपालप्रसिद्धं, पूर्व्यं—पुरातनं सर्वाधिष्ठानं सर्वकर्तारञ्च, ऋतस्य गर्भं—ऋतस्य—उपनिषदस्तज्जन्यज्ञानस्य वा (गर्भे—)जठरे वर्तमानं वेदान्तसिद्धान्तसिद्धं प्रत्यगभिन्नं परमात्मानं, स्तोतारः—स्तुध्वमिति विभक्तिविपरिणामः। न च वैदिकैरेव स्तोतव्यमिति कश्चिदस्ति नियमः, यथा विद—यथाज्ञानं यथा जानीथ तथा स्तुध्वम्। श्रौतैर्मन्त्रैरागमिकैः पौराणैः प्राकृतैर्वा स्तोत्रैः स्तुध्वमिति भावः। ततश्च जनुषा पिपर्त्तन—पिपृतेति वक्तव्ये पिपर्त्तनेति छान्दसः, जन्म पूर्यतामिति कर्मत्वयोगे कर्तव्ये जनुषेति च करणत्वनिर्देशोऽपि छान्दसः, जन्मनः पूर्त्तिमाप्नुत—जन्मानि समापयतेति भावः। अथवा, तं देवं जनुषा पिपर्त्तन—स्वच्छन्दचरितेन बहुविधेन जन्मना पूरयत, मत्स्याद्यवतारैरन्वितं वर्णयतेत्यर्थः। अथैवमपि स्तोतुमसमर्था आस्य—भगवतः श्रीमन्नामानि, चिद्विवक्तन—सदा कीर्तयत, हे विष्णो—व्यापक, ते महः—प्रकाशं स्वतस्स्वरूपप्रकाशिकां, सुमतिं—साक्षात्काररूपां, भजा-

---

तेषां क्रमो ब्राह्मणपाठात्' इति। वस्तुतस्तु सर्वे मन्त्रा न विधायका इति नास्त्येव ग्रन्थकारस्याशयः, तथाचेत्पूर्वमीमांसाभाववाक्त्वं स्यात्। किन्तु, येषां मन्त्रगतानामाख्यातशब्दानां शब्दान्तरेण विधि-

महे—अत्रापि लकारव्यत्ययश्छान्दसः, भजेमहीति । ब्रह्मविद्यामाशासानाः कीर्तयतेत्यर्थः ।

प्रतत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥इति
( ऋ. सं. अ. ५ अ. ६ व.२५ )

अयमपि मन्त्रः परमेश्वरस्यान्तर्यामिणः समस्तप्रपञ्चविलक्षणस्वरूपस्य नाम्नां परमपुरुषार्थसाधनत्वं दर्शयति । मन्त्राक्षरार्थस्तु-शिपिः शरीरं, हे शिपिविष्ट—अन्तर्यामिन् , तत्—प्रसिद्धं, ते—तव, नाम प्रशंसामि-प्रकर्षेण कीर्तयामि, यद्यप्युत्तमपुरुषोऽयं विधिशक्तिप्रति-

---

शक्तिरपगच्छति तेषामेवाविधायकत्वम् । उक्तञ्च तन्त्रवार्तिके 'विधायकत्वाविधायकत्वे तु तयोर्यथोक्तमेव कारणमिति न मन्त्रत्वब्राह्मणत्वयोर्व्यापार' इति । ते च शब्दाः यच्छब्द-आमन्त्रणविभक्ति-उत्तमपुरुष-यद्-प्रभृतयः । सूचितं च ग्रन्थकारेण 'प्रशंसामि-प्रकर्षेण कीर्तयामि' इत्यादावनुपदम् ।

*यद्यप्युत्तमपुरुषोऽयमिति* । ननु सर्वत्रोत्तमपुरुषो न स्वार्थबोधजनकशक्तिप्रतिबन्धकः, किन्तु लिडादिस्थल एव। अन्यथा विधिलिङ उत्तमपुरुषप्रयोग एव न स्यात् । अथ वा, मत्तस्वापादिहेतुभिर्लिडाद्युत्तमपुरुषप्रयोगवत्तस्य प्रयोगस्योपपादनीयत्व स्यात् । अपि च, 'दध्ना जुहोति' इत्यादिस्थले यथा जुहोतीत्यस्य जुहुयादिति विपरिणामः क्रियते, लेटः प्रयोग इति वा कल्प्यते, तथा लडाद्युत्तमपुरुषस्यलेऽपि प्रयोगविपरिणामः, पञ्चमलकारकल्पना वा क्रियतां कुतस्तत्रोत्तमपुरुषस्य विधिशक्तिप्रतिबन्धकत्वमिति चेत् , न । 'दध्ना जुहोति' इत्यत्र प्राप्तहोमस्य द्रव्यरूपस्वरूपोपलब्धेर्विधिः कल्प्यते, अत्र तु याग-

वन्धकस्तथापि मन्त्रलिङ्गकल्पितो विधिः स्मृतीनां मूलमभिधीयते । कीर्तनफलमाह—आर्य इति । श्रेष्ठ इत्यर्थः । वयुनानि—सामर्थ्यानि, नाम्नस्तवैव वा, विद्वान्—जानन्नित्यर्थः । तं त्वा—त्वां, गृणामि—स्तौमि, तवसं—महान्तं, अतव्यान—अल्पोऽहं, क्षयन्त—निवसन्तं, अस्य रजसो—लोकस्य, पराके—परे पार इति ।

---

स्वरूपोपलब्ध्यभावेन विधेरकल्पनात् । ननु यथा 'अग्निहोत्रं जुहोति' इत्यादिस्थलेषु स्वरूपोपलब्ध्यभावेऽपि पञ्चमलकारः कल्प्यते, तथाऽत्रापि कल्प्यतामिति चेन्न । तत्रान्यतः सिद्धहोमनामोपलम्भेन विधिः कल्पितः, अत्र तादृशकल्पनायां न किमपि बीजम् । किञ्च, लिङर्थस्तावत् 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति सूत्राद्विध्याद्यर्थो वाच्यः, स च सर्वत्रानुगतत्वात्प्रेरणारूप एव । तथा च प्रेरणं परस्य सम्भवति न त्वात्मनाऽऽत्मानं प्रेरयितुं शक्यते । यापि 'अहं सदाचारी भवेयम्' इत्यादिस्थलेषु प्रेरणाप्रतीतिः, सापि 'आत्मैव ह्यात्मनो बन्धुः' इत्यादिवत्कल्पितभेदमादायोपपादनीया । अपि च, वेदस्यास्मद्युष्मत्तदर्थसर्वपुरुषसाधारण्येन केवलास्मदर्थसम्बन्धिविधिकल्पनमनुचितमिति नोत्तमपुरुषघटितप्रयोगे विध्यर्थ प्रयोगपरिणामः, पञ्चमलकारकल्पना वेति दिक् ।

*मन्त्रलिङ्गकल्पितविधिरिति* । लिङ्गं नामार्थप्रकाशनसामर्थ्यम्—उक्तञ्च 'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते' इति । एवञ्च, मन्त्रलिङ्गेन नाम मन्त्रगतपदानामर्थप्रकाशनरूपसामर्थ्येन, 'बर्हिर्देवसदनं दामि' इत्यस्य यथा लिङ्गेन विधिं प्रकल्प्य लवनाङ्गत्वं समर्थ्यते तथाऽत्रापि सम्भवेदिति भावः ।

अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारुदेवस्य नाम ।
( ऋ. सं. अ. १ अ. २ व. १३ मं. २ )

कस्य नूनं कतमस्यामृतानां मनामहे चारुदेवस्य नाम ।
( ऋ. सं. अ. १ अ. २ व. १३ )

न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ (ऋ. सं. अ. ५ अ. ३ व. ५)

---

*अग्नेर्वयमिति* । यज्ञे स्तम्भसम्बद्धस्य शुनःशेपस्यैर्वाक्यमिदम् । अक्षरार्थस्तु-वयं-शुनःशेपनामकाः, अमृतानां-देवानां मध्ये, प्रथमस्य-मुख्यस्य, देवस्य-द्योतनशीलस्य, चारु-शोभनं, नाम-अभिधानं, मनामहे-उच्चारयामः । 'स नो मह्या आदितये पुनर्दात्पितरं च दृशेयं मातरं च' इति मन्त्रशेषः । तदर्थस्तु—सः-अग्निः, नः-अस्मान् मुमूर्षून्, मह्यै-महत्यै, अदितये-पृथिव्यै, दात्-दद्यात्, पुनः-भूयः, बन्धान्मुक्त्यनन्तरमित्यर्थः, मातरं-अम्बां, पितरं-जनकं, दृशेय-पश्येयमिति ।

*कस्येति* । कतमस्य—किं जातीयस्य, कस्य देवस्य, नूनं-निश्चयेन, अन्यत्सर्वं पूर्ववत् । अत्र 'कोनोमह्या०' इत्यादिः पूर्वव-त्समानानुपूर्विकः समानार्थको मन्त्रशेषः ।

*नते गिरो अपीति* । अस्यार्थस्तु-हे इन्द्र तुरस्य-शत्रूणां हिंसकस्य, ते-तव, गिरः-स्तुतीः, असुर्यस्य-त्वदीयमसुर्यं बलं, द्वितीयार्थे षष्ठी, सुष्टुतिं-शोभनां स्तुतिं च, विद्वान्-जानन्नहं, नापि मृष्ये-न मार्जयामि न परित्यजामीत्यर्थः । मृषेर्मार्जनकर्मत्वमन्यत्रापि दृश्यते । तद्यथा-मा वो अग्ने सख्या पित्र्याणि प्रमर्षिष्ठाः ( ऋ० १।७१।१० ) इति । किन्तु स्वयशः-असाधारणयशः, ते-तव, नाम-अभिधानं स्तोत्रं वा, सदा-सर्वदा, विवक्मि-विवच्मि-ब्रवीमीति ।

मर्त्ता अमर्त्यस्य ते भूरि नाम मनामहे ।

( ऋ. सं. अ. ५ अ. ८ व. ३५ )

इत्यादयोऽप्यन्ये मन्त्रा वाङ्मनसागोचरस्य भगवतो नाम्नां

---

*मर्तेति* । मर्ता-मनुष्याः, विप्रासः-मेधाविनः, वयं, हे अग्ने जातवेदसः-जातानां वेदितुः, अमर्त्यस्य देवस्य, भूरि-विस्तृतं, नाम-अभिधानं स्तोत्रं वा, मनामहे-जानीमः कुर्म इत्यर्थः । अत्र 'विप्रासो जातवेदसः' इति वाक्यशेषः ।

*इत्यादयोऽप्यन्ये मन्त्राः इति* । ते च ऋग्वेदपरिशिष्टस्था दृश्यन्ते । यथा—

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणाकर शङ्कर ॥
हर शम्भो महादेव विश्वेशामरवल्लभ ।
शिव शङ्कर सर्वात्मन्नीलकण्ठ नमोऽस्तु ते ॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय श्रीमहादेव ते नमः ॥
एतानि शिवनामानि यः पठेन्नियत' सकृत् ।
नास्ति मृत्युभयं तस्य पापरोगादि किञ्चन ॥ इति ।

तथा—

यशेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥
कृष्णाय गोपिनाथाय चक्रिणे मुरवैरिणे ।
अमृतेशाय गोपाय गोविन्दाय नमो नमः ॥
एतान्यनन्तनामानि मण्डलान्ते सदा पठेत् । इति ॥

परमपुरुषार्थसाधनत्वं दर्शयन्ति ।

किञ्च, लोके यावन्तः शब्दास्ते सर्वेऽपि कल्पितप्रपञ्चमादाय न कृतार्था भवन्ति, किं तु सर्वकल्पनाधिष्ठानं नारायणमादायैव कृतार्था भवन्ति । अतो हे जना नारायणमेव कीर्तयतेति भगवन्नाम्नां सर्वोत्कृष्टत्वं दर्शयति भालवी श्रुतिः—

नामानि विश्वानि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।

---

तथा—

वासनाद्वासुदेवोऽसि वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥
दश सप्त च नामानि मण्डलान्तेषु यः पठेत् ।
स शिवस्य पदं गत्वा शिवलोके महीयते ॥ इति ।

*वाङ्मनसागोचरस्येति* । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इत्यादिश्रुतेः । लोके यथा प्रतिबिम्बनिमित्तस्य बिम्बस्यावलोकन एव विशिष्टानन्दावाप्त्या कृतार्थत्वं भवति न केवलं प्रतिबिम्बदर्शने, तथा यस्मिन्सर्वः कल्पितः प्रपञ्चोऽधिष्ठितः तस्य नारायणस्य प्रतिपादकत्वे सत्येव सर्वशब्दानां कृतार्थत्वं, न तु कल्पितप्रपञ्चप्रतिपादकत्व इति दर्शयति—*किञ्च लोक इति* । भाल्लवीश्रुतौ 'उदाहरत' इति लोण्मध्यमपुरुषबहुवचनस्य विद्यमानत्वेन शेषपूरणमिदं—*हे जना इति* । *नामानि विश्वानीति* । सर्वाणि नामानि विष्णुभिन्नं विषयीकृत्य प्रवृत्तानि मिथ्यैव प्रवृत्तानि, यदा विष्णुमेव साक्षात्परम्परया वा बोधयन्ति तदा सफलानि भवन्तीत्यर्थः ।

मनुजानां कर्तव्ये प्रवर्तनाय कर्तव्यबोधकः स्पष्टो विधिरपेक्ष्यते । स च स्मृतिमहाभारतादिषूपलभ्यत एव । स्मृत्यादीनां प्रामाण्याय

नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति। इति।
किंच स्मृतिमहाभारतपुराणादिष्वपि स्पष्टं विधय उपलभ्यन्ते—

---

श्रुतस्मृत्यादिना श्रुत्यादिः कल्प्यते, न तु पुरुषप्रवृत्त्यै। एवञ्च, नामस्मरणबोधकेषु ऋग्वेदमन्त्रेषु नामस्मरणं कर्तव्यमित्यादिबोधकविधेरभावेन, ऋग्वेदादिश्रुत्यपेक्षया—प्रत्यक्षश्रुतनामस्मरणविधियुक्तस्मृतिभारतादीनामेवास्मिन्विषये मुख्यं प्रवर्तकत्वमित्यभिप्रायेणाह *किञ्चेति*।

अथवा श्रुत्यादिषु स्पष्टस्य विधेरनुपलम्भेन लिङ्गेन विधेः कल्पनं, तस्य च स्मृतिमूलकत्वकल्पनं विवादग्रस्तमिति स्मृतिभारतपुराणादिषु स्पष्टानामुपलब्धानां विधीनां प्रदर्शनं योग्यमित्यभिप्रेत्याह—*किञ्च स्मृतिमहाभारतेति*।

वस्तुत, 'एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्' इत्यादिना यथा ऋग्वेदादीनामपौरुषेयत्वं, तथा तत्सहपाठेन, 'पुरा तपश्चचारोग्रममराणां पितामहः। आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः। ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम्। नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम्'॥ इत्यादिस्कान्दप्रभासखण्डीयवाक्यपर्यालोचनया च पुराणानामपौरुषेयत्वमेव। तथा—छान्दोग्योपनिषदीयस्य 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदम्' राजसूयीयस्य च 'शौनःशेपमाख्यापयति'' इत्यादिवाक्यस्य पर्यालोचनया, 'पुराणं पञ्चमो वेदः'' 'इतिहासः पुराणं च पञ्चमो वेद उच्यते' 'वेदानध्यापयामास महाभारतपञ्चमान्। कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम्॥ आख्यानैश्चाप्युपाख्यानैर्गाथाभिर्द्विजसत्तमाः। पुराणसंहिताश्चक्रे पुराणार्थविशारदः॥ यच्छिष्टं तु यजुर्वेद इति शास्त्रार्थनिर्णयः'। इत्यादिवाक्यसमुदायपर्यालोचनया च पुराणेतिहासानां यजुर्वेदान्तर्गतत्वेन साक्षाद्वेदत्वमेव प्रतीयते। तथा चा-

तस्मादेकेन मनसा भगवान्सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च सर्वदा ॥
सङ्कीर्त्तयेज्जगन्नाथम् । गोविन्देति सदा वाच्यम् ।
नामानि तद्रतिकराणि पठेदलज्जः । जपेद्वेति ।

---

ग्निहोत्रहोमादीनां यथा 'अग्निहोत्रं जुहोति' इत्यादिसर्वप्रमाणमूर्धन्यभूतवैदिकविधिमूलकत्वेन निःसन्दिग्धं प्रामाण्यमङ्गीक्रियते, तथैव वेदरूपमहाभारतपुराणादिप्रामाण्यान्निःसन्दिग्धमेव नामकीर्तनात्पापक्षयप्रतिपादकानां विधीनां प्रामाण्यमिति पौराणिकानां पन्थाः । मूलन्तु पुराणादिप्रतिपाद्यस्य श्रुतिमूलकत्व एव प्रामाण्यमिति मीमांसकाद्दृतसरण्यनुसारीति ज्ञेयम् ।

*तस्मादेकेन मनसेति* । सर्वदा तत्परचेतसा । *सात्वतां पतिरिति* । सत्-विशुद्धसत्त्वरूप ईश्वरो विद्यते येषां ते सत्वन्तो–भक्ताः, सत्वन्त एव सात्वन्तः, प्रज्ञादित्वात्स्वार्थेऽणि तन्निमित्तिका वृद्धिरार्षोऽणो लोपश्च । अथवा पृषोदरादित्वाद्वृद्धिः । *श्रोतव्य* इति । सत्यन्यस्मिन्वक्तरि श्रोतव्यः, सत्यसति वा श्रोतरि स्वेन कीर्तितव्यः, श्रवणकीर्तनयोरसम्भवे ध्यातव्यः, सर्वस्याप्यसम्भवे प्रतिमादिषु पूजनीयः । 'सर्वदा' 'एकेन मनसा' इतिपदद्वयस्य प्रत्येकं सम्बन्धेन सर्वः समयो यथाकथञ्चिदीश्वरपरत्वेनेश्वरभजने योजनीय इत्यर्थः । अनेन श्लोकेन श्रवणकीर्तनध्यानपूजनानि विधियन्ते । 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इतिसूत्रेण विधिरूपप्रैषे कृत्यप्रत्ययानां विधानात् । *तद्रतिकराणीति* । भगवतो भक्तविषयकप्रेमोत्पादकानि । अथवा नामोच्चारणकर्तुर्भगवद्विषयकप्रेमोत्पादकानि । 'पठेत्' इतिपदस्य स्थाने 'जपेत्' इत्यपि पदमुपलभ्यत इत्याशयेनाह–*जपेद्वेति* । *अलज्ज इति* । उच्चैरुच्चारणं

विष्णोर्नामान्यनिशम् ।

हरेर्नाम परं जप्यं ध्येयं गेयं निरन्तरम् ।
कीर्तनीयं च बहुधा निर्वृत्तिं बहुधेच्छता ॥
नृहरे इति यो नित्यं कीर्तयेच्छुद्धबुद्धिमान् ।

इत्यादयः ।

---

कर्तव्यमितिबोधनार्थमिदं पदम् । *विष्णोर्नामान्यनिशमिति* । अत्र विधिबोधकपदघटितं वाक्यं 'हित्वा लज्जां कलिमलकुलच्छेदकानीरयेद्वा' इति पूर्वं शेषः 'अमृतप्राप्तिरेषा चतुर्धा' इत्यन्ते च वाक्यशेषः । *निवृत्तिमिति* । *बहुधेति* । सायुज्याद्यनेकप्रकारकमुक्तिमिच्छतेत्यर्थः । *इत्यादय इति* । आदिपदेन 'गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः' इत्यादयो ग्राह्याः ।

अथ 'सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् । नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः' ॥ 'सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति' ॥ 'नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः । तावत्कर्तुं न शक्नोति पातकं पातकी जनः' ॥ इत्यादिवचननिचयावलोकनेन सर्वेषामपि पापानां नाशाय भगवन्नामस्मरणमेवैकासाधारणं साधनं प्रतीयते । अथ च-'ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्' 'शिरःकपाली ध्वजवान्भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्' ॥ 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान्' ॥ इत्यादिस्मार्तस्मरणेन ब्रह्महादिपातकिनां शुद्ध्यर्थं तत्तत्कालदेशसाध्यमहानुष्ठानेन पातकनिवृत्तिरन्यथा दारुणनरकगमनमिति प्रतीयते । तथा चानयोर्मध्य एकस्य प्रामाण्येऽन्यस्य बाधः स्यात् । अपि च, लोकानां सर्वत्र महाफलके सुलभोपाये प्रवृत्तिदर्शनात्स्मृत्युक्तप्रायश्चित्तानां सर्वथैव बाधः

ननु नामकीर्तनाद्यदि महापापादीनां क्षयस्तर्हि मन्वादिशास्त्रे द्वादशाब्दादिप्रायश्चित्तविधानं व्यर्थं स्यादिति चेन्न, पातकानि महा-

---

स्यात्तदपेक्षया नामस्मरणबोधकवचनानामनुष्ठानाङ्गदेवतास्तुत्यर्थ-नोपपत्तौ केवलपापनाशकप्रायश्चित्तादिबोधिकानां स्मृतीनां बाधोऽनुचितः। किं वा, नामस्मरणस्य पापनिवर्तकत्वं स्मृत्युक्तप्रायश्चित्त-सहकारित्वरूपेणेत्यवश्यं स्वीकर्तव्यम्। एवञ्च, उभयोरपि व्यर्थत्वं न स्यादित्याशयेन शङ्कते-*ननु इति*। *महापापादीनामिति*। महापापानि च 'ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः। एते महापातकिनो यश्च तैः सह संवसेत्'॥ इति स्मृत्युक्तानि। आदिपदेन उप-पातकानुपातकादीनि ग्राह्याणि।

जनैर्भिन्नरुचित्वेन यथा महाफलसाधनाय महाकर्मापेक्ष्यते, तथा महापापनाशाय महाकर्मैवापेक्ष्यते न तु केवलमल्पप्रयत्नमल्पकालसाध्यं हरिनामेति येषां बुद्धिस्तेषां कृते कारुणिकैर्मन्वादिभिर्द्वादशाब्दादीनि प्रायश्चित्तानि विहितानि, न तु नामस्मरणं तादृशपातकनाशनेऽसमर्थमिति बुद्ध्या। एवञ्च, देवतास्तावकत्वरूपार्थवादकथनस्य नहुषदृष्टान्तेन नरकप्रापकत्वात्, नामस्मरण कर्मसहकारेण पातकं नाशयतीति कथनस्यापि 'केचित्केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः'॥ 'प्रायश्चित्त तु तस्यैकं हरिसंस्मरणं परम्। नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः'॥ 'एतेनैव ह्यघोनस्य कृतं स्यादघनिष्कृतम्' इत्यादिवचनेषु 'केवल' 'एक' 'एव' इत्यादिपद-दर्शनेनायोग्यत्वाच्च। एवञ्च, महापातकनाशार्थं महाकर्मापेक्षिणं प्रति मन्वाद्युक्तप्रायश्चित्तविधानं, अशक्तानां, नामस्मरणे श्रद्धावतां वा नामस्मरणविधानमिति विकल्प आश्रीयते। यद्यपि विकल्पस्याष्ट-दोषग्रस्तत्वेनानुसरणमयोग्यं तथाप्यन्यतरस्य बाधकल्पनापेक्षया वरं विकल्पस्वीकरणमित्याशयेनोत्तरयति *न पातकानीति*।

न्ति बहूनि च मया कृतानि तदानुगुण्येनैव महान्ति प्रायश्चित्तानि कर्तव्यानीति मतिमन्तमवलोक्यात्यन्तसारमनेकपापनिवर्तकमल्पायासं नामकीर्तनं करेण पिधाय तद्विधानोपपत्तेः । तदुक्तं याज्ञवल्कीये—

न तावत्पापमस्तीह यन्नाम्ना न हृतं हरेः ।
अतिरेकभयादाहुः प्रायश्चित्तान्तरं बुधाः ॥ इति ।

प्रायश्चित्तान्तरं—नामकीर्तनापेक्षयान्यद्द्वादशाब्दादि, बुधाः—मन्वादयः ।

किंच, कर्मानुष्ठाने वर्णाश्रमवयोऽवस्थादेशकालश्रद्धाद्यपेक्षा, नामकीर्त्तने तु—

न देशनियमो राजन्न कालनियमस्तथा ।
विद्यते नात्र सन्देहो विष्णोर्नामानुकीर्त्तने ॥

---

*याज्ञवल्कीये इति* । पाञ्चरात्रसंहितान्तर्गतयाज्ञवल्कीयसंहिताग्रन्थ इत्यर्थः ।*अतिरेकेति*। महापापनाशने महाप्रायश्चित्तान्येवापेक्षितानीति मन्यमानानां नामस्मरणेऽप्रवृत्तिरूपविशेषदर्शनस्य भयादित्यर्थः ।ये च वर्णत आश्रमतो वा बहिर्गता वयोवस्थातो दुर्बला धर्मशास्त्रोक्तदेशे गन्तुमशक्ताश्शास्त्रोक्तपुण्यकालपर्यन्तं जीवितुमसमर्थाश्च ते कथं मन्वाद्युक्तप्रायश्चित्तान्यनुतिष्ठेयुस्तत्कृतेऽस्त्येवापेक्षा नामकीर्तनरूपसर्वपापनाशकस्य प्रायश्चित्तस्येत्याशयेनाह-*किञ्चेति* । *कर्मानुष्ठाने इति* । प्रायश्चित्तरूपकर्मानुष्ठान इत्यर्थः । अथवा स्मार्तवैदिकयावत्कर्मानुष्ठाने ब्राह्मणादिवर्ण-ब्रह्मचर्याद्याश्रम-कृष्णकेशादिकवयोवस्था-आर्यावर्तादिदेश-प्रातर्मध्याह्नादिकाल-श्रद्धाशुचित्वादिगुणापेक्षा विद्यते, परन्तु येषामेतत्किमपि नास्ति तेषां कृते सर्वापेक्षारहितस्य नामस्मरणस्य विधानमुचितम् । एवञ्च, नामस्मरणरूपं क ॑ सर्वकर्मापेक्षयोत्कृष्टमिति

गच्छंस्तिष्ठन्स्वपन्वापि पिबन्भुञ्जन्नमंस्तथा ।
कृष्ण कृष्णेति सङ्कीर्त्य मुच्यते पापकञ्चुकात् ॥

इति वचनाच्च न तदपेक्षा, किन्त्वेकस्य नाम्नः सकृदुच्चरणादेव संचितानां सर्वेषां पापकर्मणां नाशः ।

सकृदुच्चारयन्ते तद्धरेर्नाम कलौ युगे ।
सकृदुच्चारयेद्यस्तु जगन्नाथेति हेलया ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥

---

नामस्मरणस्य विशेष दर्शयति—*किञ्चेति* । *स्वपन्निति* । स्वापपानादिपूर्वमित्यर्थः । एतेन स्वपतः पिबतो नामस्मरणस्यासम्भवाद्य त्किञ्चिदेतदिति शङ्का परास्ता । *कञ्चुकादिति* । कञ्चुकः—सर्पत्वक् 'कञ्चुको वारवाणे स्यान्निर्मोके कवचेऽपि च' इति मेदिनीकोषात् । सा च यथा वृद्धा शिथिला सर्पशरीरमावृत्य तस्य गमनेऽन्तरायो भवति, तथा पापकञ्चुकोऽप्यन्तःकरणमावृत्य ज्ञानादिकेषु प्राप्तव्येष्वन्तरायो भवति, तस्य हरिनामस्मरणेन नाशात्पुरुषस्तस्मान्मुक्तो भवतीत्यर्थः । एतेन कञ्चुकं तु वारवाणं, तच्छरीरस्योपकारकमेव भवतीि कथं त्याज्यस्य पापस्य कञ्चुकारोपणमित्यपास्तम्। नामकीर्तनरूपप्र यश्चित्ते सकृदुच्चारणातिरिक्तस्य न कस्याप्यपेक्षेत्याह—*किन्त्विति* *सञ्चितानामिति* । सस्काररूपेणेति शेषः । एतेन कर्मणां स्थायित्व भावेन कथ सञ्चितरूपेणस्थितिरिति शङ्का परास्ता । 'ध्यायन् कृते य जन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्' ॥ इति वचनादन्ययुगेऽन्येषां कर्मणां सर्वसाधकानां विद्यमानत्वेऽपि तत्साध्यसर्वफलसाधकस्य नामस्मरणस्यैव मुख्यत्वं कलाविति त्यभिप्रेत्याह—*कलौ युगे इति* । *हेलयेति* । लीलयेत्यर्थः । तिरस्कारेणेत्यर्थो वा । 'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वै

इत्यादिवचनात्। नामकीर्तनाभ्यासाद्भक्तिश्रद्धाशुद्धचित्त्वादि-धर्मयुक्तात्तत्सजातीयवासनानामुद्भवो दुष्टवासनानां च नाशः पुण्य-

---

पठनामग्रहणमशेषाघहरं विदुः' इत्यादिवचनात।

ननु कारणस्य कार्यसमानाधिकरणत्व एव कार्योत्पादकत्वं दृष्टम्, नामोच्चारणस्य कण्ठादिस्थानजन्यस्य तत्तद्देशस्थत्वेन विलक्षणचित्त-वृत्यात्मकदोषरूपपापनाशकत्वं कथमित्यत आह-*नामकीर्तनाभ्यासादि' त्यादि*। न केवलान्नामोच्चारणात्पापनाशः,किन्त्वभ्यस्तात्तस्मात्साधन-भक्त्याद्युत्पत्तिद्वारेत्यर्थः। एवञ्च साधनभक्ति-श्रद्धा-शुद्धत्वादिधर्मस्य चित्तवृत्तित्वेन तादृशधर्मविशिष्टादेव नामोच्चारणात्पापनाश इत्यर्थः।

वस्तुतस्तु नामोच्चारणात्पापनाशने भक्तिश्रद्धादिद्वारस्य नास्त्ये-वापेक्षा। श्रद्धायुक्तस्य मन्वाद्युक्तप्रायश्चित्तं त्यक्त्वा नामोच्चारणे प्र-वृत्तिर्नामोच्चारणाच्च श्रद्धेत्यन्योन्याश्रयापत्तिः। किञ्च, 'साङ्केत्यं पारि-हास्यं वा स्तोभं हेलनमेव वा' इत्यादिवचनोक्तेषु स्थलेषु नामोच्चा-रणे श्रद्धायाः सम्भव एव नास्ति। किञ्च, 'यद् द्व्यक्षरं नाम गिरेरितं नृणाम्। सकृत्प्रसङ्गादघमाशु हन्ति तत्'॥ 'सकृदुच्चारितं येन हरिरि-त्यक्षरद्वयम्' इत्यादिवचनेषु 'सकृत्' 'आशु' 'अक्षर' इति शब्दोच्चारणे-नोच्चारणादेव पापक्षयादि विवक्षितं, न तु मध्ये श्रद्धादिद्वारं किमपि। न च 'श्रद्धयाग्निः समिध्यते। श्रद्धया हूयते हविः'। 'यन्नामकीर्तनं भ-क्त्या विलापनमनुत्तमम्। मैत्रेयाशेषपापानां धातूनामिव पावकः'॥ 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इत्यादिश्रुतिस्मृतिवचनानां श्रद्धादिबोधकानां का गतिरिति वाच्यम्। श्रद्धादेर्नामोच्चारणे प्रवृत्तौ परम्परया प्रयोजकत्वमित्येव तैर्बोध्यते, न तु श्रद्धावतोऽधिकारो ना-मोच्चारण इत्यधिकारिविशेषणरूपं किमपि। 'यन्नाम' इति वचनस्य तु विष्णुनामकीर्तनं भक्तियुक्तं पापनाशकमिति नार्थः, किन्तु पापना-शकं विष्णुनामोच्चारणमाश्रिता भक्तिः फलगतातिशयबोधनद्वाराऽ-

सागरस्योत्पत्तिस्तत उत्तमभक्तिरूपसाक्षात्काराविर्भावस्ततो मोक्ष-
श्च भवति ।

---

नुत्तमा पापविलापिका भवतीति 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इतिवत् । एवञ्च, 'अज्ञानादथवा ज्ञानादुत्तम-श्लोकनाम यत् । सङ्कीर्तितमघं पुंसां दहत्येधो यथाऽनलः' ॥ 'यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया । अजानतोप्यात्मगुणान् कुर्यान्मन्त्रोऽप्युदा-हृतः' ॥ 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि सं-स्पृष्टो दहत्येव हि पावकः' ॥ इत्यादिवचनेषु प्रदर्शिता दृष्टान्ताः स्व-रसत उपपद्यन्ते। 'म्रियमाणो हरेर्नाम गृह्णन्पुत्रोपचारितम् । अजामिलो-ऽप्यगाद्धाम किमुत श्रद्धया गृणन्' ॥ इत्याद्यजामिलकथानकमपि स-ङ्गच्छत इति दिक् ।

*पुण्यसागरोत्पत्तिरिति*। श्रद्धायुक्तान्नामोच्चारणाद्दुष्टवासना-नाशः, तदनन्तरं कृतान्नामोच्चारणात्पुण्यपुञ्जोत्पत्तिरित्यर्थः । *उत्त-मभक्तिरिति* । सा चाराध्यविषयकाऽगौणरागवत्त्वरूपा । 'सा परा-ऽनुरक्तिरीश्वरे'इति महर्षिशाण्डिल्यसूत्रात् । अत्रागौणत्वञ्च, तदनुगु-णगणश्रवणादिनाऽनन्यविषयोत्कण्ठाह्लादविशेषादिजनकत्वम् । तच्च लौकिकानुरागादाविव सुग्रहम् । यथाह प्रह्लादः-'या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु' ॥ इत्या-दिना । *भक्तिरूपसाक्षात्कार इति* । अत्र भक्तिः साध्यरूपा । भज्यते-सेव्यत इति व्युत्पत्तेः । सा च सर्वदा भगवद्विषयोत्कण्ठाह्ला-दादिविशेषेण स्थितिरूपा । *ततश्च मोक्ष इति* । स च सर्वदा नि-त्यप्रेमाह्लादमदेश्वरसेवनरूप एव । न तु सारूप्यादिरूपः । उक्तञ्च— 'सालोक्यसार्ष्टिसामीप्यसायुज्यमेकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' ॥ इति ।

ननु भक्तानामपि देहपातानन्तरं सर्वदा नित्यप्रेमास्पदपर-

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः। इत्यारभ्य-

सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्। इत्यादिवचनात्।

क्षुद्रपापप्रारब्धानां च भगवन्नामकीर्तनौषधदानजपहोमार्चनादिभिर्नाशः।

तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः। इति वचनात्।

प्रबलपापप्रारब्धानां तु भोगेनैव क्षयः। नामकीर्तने च मनुष्य-

---

मेश्वरसेवनार्थं सामीप्याद्यपेक्षत एवेति कथं भक्ताः सामीप्यं न गृह्णन्तीति कथनमिति चेत्सत्यम्, अनादौ विचित्रे विरञ्चिप्रपञ्चेऽनेकजननिवहे केचन स्वभावत एव प्राक्तनवासनावासितान्तःकरणा विषयविषप्राशनविरक्ता निर्गुणनिराकारात्मतत्त्वोपासकाः सायुज्याधिकारिणः। केचन च निन्यालौकिकप्रेमास्पद ईशे श्रवणमनननामोच्चारणादिभिर्भक्तिं कुर्वाणाः शरीरपातानन्तरमपि दिव्यदेहेन परमेश्वरं सेवमानाः सामीप्यं न गृह्णन्ति, किन्तु वस्तुमाहात्म्येनैव प्रेमास्पदपरमेश्वरसेवनार्थं समीपे तिष्ठन्तीति भावः।

*सदोत्थायेति*। बद्धपरिकरो भूत्वेत्यर्थः। *ब्रह्म सनातनमिति*। ब्रह्म-बृंहणकर्तृ-व्यापकं, सनातनं-नित्यं, वैकुण्ठलोकमित्यर्थः। 'क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः' 'दर्शयामास लोकं स्वं गोपानां तमसः परम्। सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम्'॥ इत्यादिवचनात्। श्रीमद्भगवन्नामोच्चारणादिना सञ्चितानां, प्रारब्धेषु क्षुद्राणां च पापानां नाशो नतु महतां भोगदातॄणाम्, तेषान्तु भोगेनैव क्षयो न तु तत्र कश्चिदुपायः। 'प्रारब्धकर्मणां भोगादेव क्षयः' इति वचनादित्याह *क्षुद्रपापेत्यादिना*। *अर्चनादिभिरिति*। अर्चनं ग्रहादीनां विष्णवादीनां वा। 'ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च। भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः'॥ 'प्रणतक्लेशनाशाय

मात्रस्याधिकारः ।

प्राप्नोति सद्यः पापक्षयं नरः । इति वचनात् ।

अत्रायं निष्कर्षः । शिवविष्णुनामानि शास्त्रीयवैराग्यादिमत्

---

गोविन्दाय नमो नमः' इत्यादिवचनेभ्यः । आदिपदेन नामकीर्तनादि ग्राह्यम् ।

अथ वैदिकमन्त्रघटितेषु प्रायश्चित्तेषु यथा त्रैवर्णिकानामधिकारस्तथा तत्कार्यकारिषु नामस्मरणरूपप्रायश्चित्तेष्वपि त्रैवर्णिकानामधिकारः। किञ्च, यथा वेदानां तद्घटकानां 'अग्निमीडे' इत्यादिपदानाञ्चोच्चरणे स्त्रीशूद्राणामनधिकारस्तथा वेदरूपपुराणानां तद्घटकहरिविष्णुनाम्नां चोच्चारणेन तेषामधिकारः । तस्मान्नामस्मरणविधायकवाक्येषु विद्यमानानां सामान्यानां 'नर' 'मनुष्य'इत्यादिपदानां त्रैवर्णिकपरत्वमेवेत्यत आह-*मनुष्यमात्रस्याधिकार इति*।मनुष्यजातीयस्येत्यर्थः त्रयीरूपवेदेषु स्त्रीशूद्रादिकानामधिकाराभावेऽपि तेषां कृते कृतानि भारतादीनां श्रवणे तथा तद्घटक 'हरि' इत्यादिनामोच्चारणेऽस्त्येव तेषामधिकारः । 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । अतो भारतमाख्यानं कृपया मुनिना कृतम्' ॥ इत्यादिवचनेभ्यः ।अत एव सर्वेषु वाक्येषु 'पुमान् विमुच्यते' 'लोकस्य सद्यः' 'सकृदुच्चारितं येन' 'सद्यः पापक्षयं नरः' इत्यादिसहस्राधिकेषु वचनेषु मनुष्यजातीयबोधकपदान्युपलभ्यन्ते। किञ्च यथा त्रयीप्रोक्तकर्मसु केषुचिद् 'वर्षासु रथकारोऽग्नीनादधीत' 'एतया निषादस्थपतिं याजयेत्' इत्यादिषु यथा वचनादग्न्याधानादिष्वधिकारस्तथा पुराणादिषु वचनादेव तेषामधिकार इति भावः ।

अथ भगवन्नाम्नां मोक्षदायकत्वं पापनाशकत्वं च विद्यते यत्तत्किं मनुष्यमात्राणामुत तादृग्वासनावासितान्तःकरणानां पुरुषाणामिति विचारे सिद्धान्तं प्रदर्शयितुमाह--*अत्रायं निष्कर्ष इति* । यः खलु

श्रवणाद्यधिकारिणां तत्त्वमस्यादिवाक्यार्थमखण्डब्रह्मात्मतत्त्वं लक्षणयोपस्थापयन्ति ।

नाविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् ।
नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात् ॥

इति महाभारतवचनात् ।

नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ।
नारुद्रः संस्मरेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् ॥

इति लैङ्गवचनाच्च ।

भक्तानां चानन्तकल्याणगुणविशिष्टं भगवन्तमुपस्थापयन्ति । तदुभयविलक्षणानामतिरागिणां च चण्डालादिपर्यन्तानां न किञ्चिदुपस्थापयन्ति। (किन्तु) सर्वथा सङ्कीर्त्यमानानि सर्वदोषान् विनाशय-

---

पक्षेऽस्मिन्विरक्तः साधनचतुष्टयसम्पन्नो मुमुक्षुस्स यथा तत्त्वमस्यादिवाक्यार्थबोधनपूर्वकं गुरुणोपदिष्टो भावनया दृढया तत्त्वमस्यादिवाक्येभ्योऽखण्डमात्मतत्त्वं लक्षयित्वा कृतकृत्यो भवति, तथा शिवविष्णुनामभ्योऽपि विरक्तो विष्णुरुद्रादिभावनया दृढया 'नाविष्णुः कीर्तयेद्विष्णु' इत्यादिवचनात् विष्णुरुद्रादिवद्भूत्वा तत्त्वमस्यादिवाक्यवच्छिवादिशब्देभ्योऽपि निर्गुणमखण्डं शिवादितत्त्वं लक्षयित्वा तद्भवति। भक्तानान्तु सर्वदेश्वरप्रेमसेवनानुरक्तानां जगत्सर्वमपि प्रेमपरिप्लुतं पश्यतामनन्तकल्याणगुणगरिष्टं प्रेमपूरितं शामलतनुं पीतवाससं कञ्जनाभं श्रीनारायणं विष्ण्वादिवाक्यान्युपस्थापयन्ति । संसारविषयासक्तानां वैराग्यादिहीनानां मनुष्याणां सर्वदा सङ्कीर्त्यमानानि नामानि प्रबलप्रारब्धपापातिरिक्तानि सर्वाण्यपि पापानि नाशयित्वा, वैराग्यादिकं सम्पाद्य सर्वाभीष्टं मोक्षादिकं च प्रयच्छन्तीति

न्त्येव सूर्य इव तमोजालं, सर्वाभीष्टं च प्रयच्छन्तीति। पराक्रान्तं चात्र बहुभिर्भगवदनुगृहीतैराचार्यैः। विस्तरभयादस्माभिरुपरम्यते। तानि

---

नामोच्चरणस्य कदाचिदपि व्यर्थत्वं नास्तीति बोध्यम्। *सूर्य इव तमोजालमिति*। अनेन दृष्टान्तेन नाम्नां स्वाभाविकपापनाशकत्वं सर्वाभीष्टप्रदायकत्वञ्चास्तीति बोधितम्। *पराक्रान्तमिति*। व्यापारितमित्यर्थः। *आचार्यैरिति*। विष्णुसहस्रनामभाष्यादिषु पूज्यपादशङ्कराचार्यैः, भगवन्नामकौमुद्यां श्रीलक्ष्मीधरमिश्रैः, वैष्णवकण्ठाभरण आश्रमस्वामिपादैः, प्रकाशादिष्वनन्तदेवादिभिरित्यर्थः।

अथात्र निष्कर्षविचारे पूर्वोक्तमन्यदपि चात्यावश्यकं निष्कर्षभूतं बोधबुद्धिवैशद्यार्थं सङ्क्षेपतो विचार्यते। अध्वरमीमांसकैर्वेदसूत्रस्मृत्यादिष्वेकरूपं प्रामाण्यमनङ्गीकुर्वद्भिर्वैदिकवचनं मुख्यं प्रमाणं, सूत्रस्मृतिवचनं च वेदद्वारा प्रमाणमित्युच्यते। तथा परमनिःश्रेयसाय 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यग्निहोत्रादिकं, पापनाशाय च 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यश्वमेधादिकमुपायभूतमनुष्ठेयम्, अन्यच्च पुराणप्रोक्तं 'सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ' 'एवमेतानि नामानि देवदेवस्य कीर्तयेत्। यं यं काममभिध्यायेत्तं तमाप्नोत्यसंशयम्'॥ 'सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्। नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः'॥ 'सर्वरोगोपशमनं सर्वोपद्रवनाशनम्। शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्तनम्'॥ 'सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः। यद्वाऽभिरोचते नाम तत्सर्वार्थेषु योजयेत्'॥ इत्यादि पापनाशाय परमेष्टप्राप्तये चोपायभूत सर्वमप्यर्थवाद एव। सर्वाण्यपि पुराणानि वैदिकविध्युद्देश्यदेवतास्तावकान्येव। अत एव वैदिककथानकस्य 'हरिश्चन्द्रो ह वै राजा आस' इत्यादेर्विधिशेषात्मकार्थवादरूपस्य सम्वादो दरीदृश्यत एतेष्वित्याद्यभिप्रेयते।

अत्र पौराणिकमतालोचन इदं तावद् दरीदृश्यते—तेऽपि वैदिका-

एव । वेदास्तैरपि प्रमाणतया स्वीक्रियन्त एव । परन्त्वध्वरमीमांसकैर्यथानुष्ठानादौ सूत्रादि प्रधानतयाङ्गीकृत्य तदुक्तान्येव कर्माणि विधिप्रायश्चित्तरूपाण्यनुष्ठीयन्ते, तथैतैर्वेदरूपपुराणं प्रधानतया स्वीकृत्य तदुक्तोपायैर्नामसङ्कीर्तनादिभिः परमनिःश्रेयसं पापनिवर्तनं च भवतीत्यभिधीयते, तथा प्रसिद्धैश्चतुर्भिर्वेदैःसूत्रस्मृतिभिश्च यत्फलं प्राप्यते तत्सर्वमपि 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्' ॥ इत्यादिवचनैर्नामकीर्तनादेव लभ्यत इति च । अपि च, कर्मभिर्यानि पातकानि नश्यन्ति तानि न समूलं नश्यन्ति, किन्तु 'तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः । नाधर्मजं हृदयं तदपीशाङ्घ्रिसेवया' ॥ 'कर्मणा कर्मनिर्हारो नह्यात्यन्तिकमिष्यते । अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनम्' ॥ 'प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनन्ति राजेन्द्र सुराभाण्डमिवापगाम्' ॥ इत्यादिवचनैः । पापजन्ये नरकादिफले नष्टेऽपि पापस्य संस्कारस्तिष्ठत्येव । अत एव वैदिकप्रायश्चित्तानुष्ठाने कृतेऽपि पुरुषाणां पापे प्रवृत्तिर्दरीदृश्यते । उक्तश्च 'क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः । प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत्' ॥ इति ।

अयमभिप्रायः, प्रदर्शितवचनैः प्रायश्चित्तानां वैदिकानां सम्पूर्णतयाऽघनाशकत्वं नास्त्येव । यच्च तैः प्रायश्चित्तैः पातकं नाश्यते, नश्यतस्तस्मादपरं संस्काररूपं पापकर्मणि प्रवर्तकं पापं निर्वर्त्यत एव । अत एव 'हिंसाऽहिंसे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते' ॥ इतिविष्णुपुराणीयवचनेन हिंसाऽहिंसाद्यतिरिक्तं 'तद्भावित' इतिपदेन बोधितं संस्काररूपं किञ्चिदस्तीति सूच्यते । किञ्च, 'पातकं संस्कारजनकं संस्कारभिन्नत्वे सति विनश्यत्वात् क्रियावत्' इत्यनुमानमपि पापजसंस्कारबोधकम् । पुराणोक्तं नामकीर्तनादि तु सम्पूर्णपापनाशकम् । सम्पूर्णपापनाशकत्वं नाम पापसजातीयसंस्कारानारम्भकत्वम् । एवञ्च, वैदिकं

प्रायश्चित्तं कृतमपि कुञ्जरस्नानवन्निष्फलं, पौराणिकन्तु न तथेति तदेव नामकीर्तनाद्यनुष्ठेयं सुखमभीप्सता। ननु पौराणिके नामकीर्तनादिन्यनुष्ठितेऽपि दृश्यते पापेषु मनुष्यप्रवृत्तिरिति चेत् सत्य, सकृत्कृते नामकीर्तने सञ्चितं नरकादिजनकं पापं नश्यति, परन्तु तज्जन्यसंस्कारस्तु न नश्यति। तस्माद् यावत्पर्यन्त संस्कारनाशो न भवति तावत्पर्यन्तमनुष्ठातव्य नामकीर्तनादि। यथा व्रीहीणां पुरोडाशप्रकृतिद्रव्यतया पुरोडाशनिष्पादनार्थे व्रीहीणामवघाते कर्तव्ये यावत्तण्डुलनिष्पत्तिमवघातः क्रियते, तथा यावत्फलमनुष्ठातव्यो नामोच्चारणाभ्यासः। वैदिकानि प्रायश्चित्तानि तु नामोच्चरणादिरूपे सरले सर्वपापनिवर्तके विद्यमानेऽपि प्रायश्चित्ते तत्राप्रवृत्तिमन्तं पुरुषं प्रति प्रोक्तानि, न तु नामोच्चरणाद्यसमर्थे सम्पूर्णपापनाशायेति धिया। वास्तविकन्तु तानि सर्वाण्यपि वैदिककर्माणि पापनाशने कलौ न पर्याप्तानि 'कलौ गङ्गैव केवलम्' 'कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा' 'कर्मणा कर्मनिर्हारो न ह्यात्यन्तिकमिष्यते' इत्यादिवचनेभ्यः। किन्तु 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' इति न्यायेनाविद्वत्सन्तोषाधायकानि तानीति ध्येयमिति।

वस्तुतस्तु, एकस्य साध्यस्य साधनेऽनेकेषूपायेषु विद्यमानेषु मनुष्याणां यथारुचि प्रवृत्तिर्भवतीति लोके दरीदृश्यते बहुशः। यथा भोज्येऽनेकविधे यथाभिलाष पुरुषप्रवृत्तिः, तत्रैकेन साध्ये क्षुधानाशनेऽन्यस्य भोज्यस्य व्यर्थत्वमथवा हानिकरत्वमित्यादिकं नोच्यते, तथात्रापि। तथा च येषां वैदिककर्मानुष्ठाने श्रद्धा तैः पुराणादिकेषु वैदिककर्मणा सम्यक् शुद्धिर्न भवतीति प्रतिपादकेषु सत्स्वपि वैदिककर्मैवानुष्ठीयते। येषां च पुराणादिषु श्रद्धा तैर्वैदिकप्रायश्चित्तेषु विद्यमानेष्वपि पौराणिकमेव नामस्मरणाद्यनुष्ठीयते। येषां च श्रुतिस्मृतिपुराणेषु श्रद्धा तैः कस्यापि बाधो मा भवत्वितीच्छया गुरुलघुभेदेन, ज्ञाताज्ञातभेदेन, प्रकटरहस्यभेदेन वा व्यवस्थामथवा समुच्चय स्वीकृत्य व्यवह्रियते। एवञ्च श्रद्धासापेक्षं व्यवस्थितं प्रामाण्यम्। अत एव केचन शैवाः, परे वैष्णवाः, अन्ये शाक्ताः, अपरे स्मार्ता इत्यादयो बहवोऽनेकमतावल-

म्यनः स्वस्वमतानि वैदिकानि प्रमाणानीत्यङ्गीकुर्वाणा उपलभ्यन्ते।

ननु पुराणैरेव स्पष्टतया 'कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते' पापे गुरुणि गुरूणि स्वल्पान्यल्पे च तद्विदः। प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम्' ॥ इत्यादिवचनैर्वैदिकप्रायश्चित्तैर्न पातकं सम्पूर्णतया नश्यतीति बोध्यत इति चेत् सत्यं, यथा नामोच्चरणादिरूपप्रायश्चित्ते कृतेऽपि पुनः पापे प्रवृत्तिवारणार्थं नामोच्चरणाभ्यासादिरपेक्ष्यते, तथैव वैदिकप्रायश्चित्ते कृतेऽपि पापे प्रवृत्तिवारणार्थं शुभवासनोत्पादकवैदिककर्मानुष्ठानावृत्तिरपेक्ष्यत इति वक्तुं शक्यम्। अत एव 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते' 'तावत्कर्माणि कुर्वीत नो निर्विद्येत यावता' इत्यादिवचनैः वैदिककर्मणां नामोच्चारणवत् सम्पूर्णपापनाशकत्वं निर्वेदोत्पादकत्वं चोक्तं सङ्गच्छते। किञ्च, बृहन्नारदपुराणे तु विस्तरेण महता—

'वेदप्रणिहितो धर्मो वेदो नारायणः परः।
तत्राश्रद्धापरा ये तु तेषां दूरतरो हरिः' ॥
'स्वाचारमनतिक्रम्य हरिभक्तिपरो हि यः।
स याति विष्णुभवनं यद्वै पश्यन्ति सूरयः॥
कुर्वन्वेदोदितान्धर्मान्मुनीन्द्र स्वाश्रमोचितान्।
हरिध्यानपरो यस्तु स याति परमं पदम्' ॥
'यः स्वाचारपरिभ्रष्टः साङ्गवेदान्तगोऽपि वा।
स एव पतितो ज्ञेयो यतः कर्मबहिष्कृतः॥
हरिभक्तिपरो वापि हरिध्यानपरोऽपि वा।
भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते' ॥
'आचारात्प्राप्यते स्वर्गमाचारात्प्राप्यते सुखम्।
आचारात्प्राप्यते मोक्षमाचारात्किं न लभ्यते' ॥

इत्यादिना स्वाश्रमाचाररहितस्य नामोच्चारणादिसर्वविधयाऽपि भक्त्याऽपावनत्वं पतितत्वं च प्रतिपादितम्।

अत्रेदमाकूतम्, अलौकिकस्येश्वरादितत्त्वस्य तत्प्रापकोपायस्य विषये सर्वथा वयमल्पबुद्धिनोऽसमर्था एव। ये च स्वीयालौकिक बुद्ध्या तादृशमलौकिकमर्थमीश्वरकृपया च दृष्ट्वा ऽस्मान्मन्दाननुजि वृक्षन्ति, तैः प्रतिपादितानामुपायानां कर्मणामुपासनानां ज्ञाना नामोच्चरणश्रवणादिकानां वाऽनुष्ठानं कर्तव्यमित्येवास्माकं कर्तव्यम् तत्र च सर्वेषामुपायानामनुष्ठान कर्तुमशक्यमुपायबोधकसकलव क्यार्थविरोधि चेति कृत्वा मीमांसकैर्दर्शितरीत्या युगभेदेन गुरु लघ्वादिभेदेन वा व्यवस्थाविकल्पादिक कृत्वाऽनुष्ठातव्य, न तु मी मांसकोक्तमेवोपायादि साधु, पौराणिकोक्तमसाधुरिति बुद्धिः कार्या यतो ये वैदिका ऋषयो देवादयस्त एव पौराणिका अपि। यदि तैर्ब्राह्मणसूत्रादिषु प्रोक्तं प्रमाणं, तर्हि तेनैव न्यायेन पुराणादिषूक्त सर्वमपि प्रमाणमेव। एवञ्च सर्वेषां वैदिकपौराणिकाद्युपायानां सम न्वयं व्यवस्थादिकं वा कृत्वा यावच्छक्यं सर्वमेवाचरणीयम्, इदमे वाधुनापि शिष्टपरिगृहीतं दरीदृश्यते सर्वत्रेति।

अथाप्रमाणरूपार्थवादकथनमात्रेण कथमनर्थप्राप्तिर्भवतीति विचि कित्सायां अर्थवादत्वं तावत् 'शास्त्रदृष्टविरोधाच्च' 'तथाफलाभावात्' 'अन्यानर्थक्यात्' 'अभागिप्रतिषेधाच्च' इत्यादिहेतुभिर्मीमांसकैः सिद्धा न्तितम्, तस्य मुख्यं कारण, यत्र यद्यथा ज्ञायते, निपुणतया विचार क्रियमाणे तत्तथा नास्तीति तत्रार्थवादत्वं निपुणालोचितार्थान्तराविरोध्यर्थत्वरूप परिकल्पनीयम्। परन्तु यद्वस्तुतः समीचनं वस्तुभूत तस्यान्यथाकल्पनं दोषास्पदमेव। नामरूपस्य परमात्मनोऽन्यथा कथन तु परमहानिकरं नरकदायकं च।

उक्त च—

'अर्थवादो हरेर्नाम्नि सम्भावयति यो नरः।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम्'॥
'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृत पापं चोरेणात्मापहारिणा'॥

आरण्यकेऽपि 'प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजाः तिस्रोऽत्यायमीयुस्तानीमानि वयांसि वङ्गा वगधाश्चेरपादाः'इति। अस्यार्थः। सत्यं नातिक्रामेत्, तिस्रः प्रजा अतिक्रान्तवत्यः, तस्मात्ता वयांसि-पक्षिणः, वङ्गाः-वनगा-वृक्षाः, वगधाः-ओषधयः, इरपादाः-उरःपादाःसर्पादयो जाता इति। एवञ्च, यस्य यथा स्वरूपमस्ति तस्यान्यथा कथनं हानिकरमेव। अत एव नहुषराजकथानके 'यस्मात्पूर्वैः कृतं मार्गं महर्षिभिरनुष्ठितम्। अदुष्टं दूषयसि वै' इत्याद्युक्तं सङ्गच्छत इति दिक्।

श्रद्धाद्यधिकारिविशेषणमिति सिद्धान्ते किञ्चिदन्यरीत्या दिक्प्रदर्शनं क्रियते। 'श्रद्धया देयम्' 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इत्यादिवचनैर्यत्किञ्चित्कर्म क्रियते तच्छ्रद्धया कर्तव्यमिति प्रतीयते,ततो नामोच्चरणादिकमपि कर्मत्वात् श्रद्धया भक्त्या च कर्तव्यमेवेति विचारे 'यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तादृशी' 'यदृच्छया मत्कथादौ वा जातश्रद्धश्च यः पुमान्' 'मन्नामकीर्तनं भक्त्या विलापनमनुत्तमम्' 'भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पलकां तनुम्' 'वासुदेवे भगवति भक्तियोगः प्रयोजितः' 'तीव्रेण भक्तियोगेन यजते पुरुषं परम्' 'केचित्केवलया भक्त्या' 'भक्त्या मामभिजानाति' इत्यादिवचनैर्नामोच्चारणादिषु श्रद्धाभक्तिमतोऽधिकारः प्रतीयते। परन्तु तानि सर्वाण्यपि वचनानि पूर्वोक्तदिशा (पृ० ३०) फलगतातिशयबोधकान्येव नतु श्रद्धावतो भक्तिमतो वाऽधिकार इत्यधिकारिणो विशेषणानि। अत एव पद्मपुराणीयक्रियायोगसारीयं—

'ततोऽसौ लब्धतारुण्यः शुको गणिकया तया।
रामेति नाम सततं पाठ्यते सुन्दराक्षरम्॥
रामनाम परं ब्रह्म सर्ववेदाधिकं महत्।
समस्तपातकध्वंसि शुकस्तत्तदाऽपठत्॥
रामोच्चारणमात्रेण तयोश्च शुकवैश्ययोः।

विनष्टमभवत्पापं सर्वमेव सुदारुणम्' ॥

इति शुकपक्षिणः पक्षित्वादेव श्रद्धारहितस्य सकलपापनाश कत्वकथनं सङ्गच्छत इति । परन्त्वस्मिन्सिद्धान्तेऽनेकवचनान फलगतातिशयबोधकत्वकल्पनापेक्षयाऽधिकारिणो विशेषणपरत्वमेवा ङ्गीकरणं रमणीयम् । नच पूर्वोक्तदिशाऽन्योऽन्याश्रय इति वाच्यम् आपाततः श्रद्धया प्रवृत्तिरनन्तरं नामोच्चारणाद्दृढा श्रद्धा भवतीि कल्पनेऽदोषात् । ननु'साङ्केत्यं पारिहास्यं वा' 'यद्व्द्यक्षरं नाम गि रेरितं नृणाम्' 'सकृदुच्चरितं येन' 'अज्ञानादथवा ज्ञानात्' 'यथाऽगद वीर्यवत्तरम्' 'हरिर्हरति पापानि' इत्यादिवचनानां श्रद्धादिरहितत्वेऽपि पापनाशबोधकानां का गतिरितिचेदुच्यते । विशेषकाले विशेषपरि स्थितावुच्चरितस्य श्रद्धादिरहितस्यापि पापनाशकत्वं सर्वश्रेयस्क रत्वञ्च कल्प्यते । यथा गङ्गादिपुण्यतीर्थे ग्रहणादिकाले श्रद्धादिरहित स्य जातस्याल्पस्यापि बहुफलकत्वं तद्वत् । स च कालः मरणाव्यवहि तपूर्व 'विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम्' 'नामानि येऽसुविगमे विवशा गृणन्ति' 'ब्राह्मणः श्वपचीं भुञ्ज विशेषेण रजस्वलाम् । अश्नाति सुरया पक्व मरणे हरिमुच्चरन् । मुच्य ते पातकात्तस्मान्नात्र कार्या विचारणा' ॥ इत्यादिवचनेभ्यः । विशेषेण स्थितिश्चावशादिरूपा, 'अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः' 'हरि रिति सकृदुच्चरित दस्युच्छलेन यैर्मनुजैः' इत्यादिवचनेभ्यः । एवञ्च श्रद्धादिरहितपुरुषोच्चारितनाम्नः पापनाशकत्वबोधकानि सर्वाण्यपि वचनान्येवरीत्या व्याख्येयानि । पद्मपुराणीयशुकपक्षिणः कथानवे स श्रद्धादिरहित आसीदित्यत्र न किञ्चिदपि प्रमाणम् । श्रूयते हि पुराणेषु पक्षिप्रभृतीनां श्रद्धाज्ञानादिमत्व, यथा मृगरूपस्य जडभरत स्य, ऋषिपञ्चमीकथास्थवृषभशुन्योश्च । तथाऽस्यापि कल्प्यते । एवञ्च श्रद्धादिमत्वेन सर्वपातकनाशकथन समुचितमेव, श्रद्धादिराहित्ये दोषश्रवण 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इति च सङ्गच्छते ।

अथ भगवन्नामोच्चारणं किं सर्वदा विधेयम्, अथवा कालादिकस्य नियमनमस्ति किञ्चिदिति विचारे 'चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया' ॥ 'हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः । ओमित्येवं सदा विप्रा पठध्वं ध्यात केशवम्' ॥ 'गोविन्देति सदा वाच्यम्' 'भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः' 'नृहरे इति यो नित्यं कीर्तयेच्छुद्धभक्तितः । गच्छंस्तिष्ठन्स्वपन्वापि पिबन्भुञ्जन्रमंस्तथा' ॥ इत्यादिवचनैस्सर्वदा नामोच्चारणं कर्तव्यमिति प्रतीयते, तत्त्वशक्यमन्यकर्मणा जीवनायावश्यकानां विद्यमानत्वात् । तस्मात् 'यावज्जीवमग्निहोत्रं जुहोति' इति वचनविधेयाग्निहोत्रं यावज्जीवितकालमनुष्ठातुमशक्यं तत्र 'सायं जुहोति,प्रातर्जुहोति' इतिनियमो यथा विहितस्तथात्रापि 'प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन्' 'उत्तिष्ठता प्रस्वपता प्रस्थितेन गमिष्यता । गोविन्देति सदा वाच्यं क्षुत्प्रस्खलनादिषु' ॥ इति नियतकालस्य नियमनेन तद्वाक्यानां सङ्कोचस्य बोधनात् । 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्' । इत्यादिवचनेषु यत्सकृदुच्चरणं तत्प्रातरादिषु सकृदप्युच्चरणं कर्तव्यमित्येवंपरमिति बोध्यम् । अथवा 'प्रातः' इतिवचनस्योपलक्षणत्वं स्वीकृत्य जीवनायावश्यककार्यातिरिक्तकाले सर्वदा नामोच्चरणं कर्तव्यमित्येवंपरमिति दिक् ।

अथ भगवद्वाचकानां शब्दानां यत्पापनाशकत्वं कल्याणप्रदत्वञ्चोच्यते, तत्रायं विचारः प्रादुर्भवति, किं रूढानां नाम्नामुत यौगिकानामपि । तथा सहस्रनामादिस्तोत्रे प्रत्येकस्य वाचकत्वमुत समुदायस्येति । तत्र पुराणेषूभयविधनाम्नामुपलब्धिः 'कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान्' ॥ 'यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये' ॥ 'गोविन्देति समुच्चार्य पदं क्षपितकल्मषः' इत्यादिषु । एवञ्चोभयविधानामपि तादृशफलजनकत्वमवश्यं कल्पनीयम् ।

ननु यदि यौगिकानामपि तादृशफलकत्वं स्वीक्रियेत
तदा जगति विद्यमानानां सर्वेषामपि पदानां यथाकथञ्चित्
षद्वाचकत्वे सर्वेषामपि पापिनां पापनाशकत्वमतिसुकरमि
सत्यं, सर्वपदानां योगद्वारेण भगवद्वाचकत्वस्वीकारेऽपि यद
कया श्रद्धया तादृशपदं भगवद्वाचकमिति बुद्धयोच्चार्यते
भवत्येव तेषां तत्फलम्। अत एव वाल्मिकिना श्रद्धया वैपरी
प्युच्चरित 'मरा मरा मरा' इत्यादिरामनाम्नि तस्य परमकल्य
ज्ञातं 'इत्युक्त्वा राम ते नाम व्यत्याक्षरपूर्वकम्। एकाग्रमन
मरेति जप सर्वदा' ॥ 'अहं ते राम नाम्नश्च प्रभावादीदृशोऽभ
इत्याद्यध्यात्मरामायणीयं कथनं सङ्गच्छते। अत एव 'स
पारिहास्यं वा स्तोभं हेलनमेव वा' इत्यादिवाक्यानां स
तपूर्वपुण्यपुञ्जप्रादुर्भावेन मरणसमये यस्य मुखारविन्दात्प्रादु
भगवन्नाम तस्यैव मुक्तिरिति सङ्कोच आवश्यक, अन्यथा
दिराहित्येन कृतान्नामोच्चरणादपि तादृशफलकत्वस्वीकारे, व्य
रकरणसमये निष्कामन्त्येवानेकानि पदानि सर्वेषामत्यन्तप
नामपि मुखाच्चानि सर्वाण्यपि कथञ्चिद्रीत्या भगवद्वाचकानी
षेषां पापनाशकत्वे पुराणोक्तनारकीयवर्णनमसङ्गत स्यात
त एव 'गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः'
त्र 'तदर्थकानि' इति पदमुपात्तम्। अन्यथा 'गीतानि नामानि' इत्यु
चेष्टसिद्धौ तत्पदं व्यर्थं स्यात्। तत्पदेन च—'एतन्नाम भगवदर्थवे
ज्ञाते ज्ञानस्यापेक्षास्तीति सूच्यते। एतदभिप्रायेणैव श्रीहेमाद्रिणा
फलटीकायां कैवल्यदीपिकायामुक्तं 'अकारो हि प्रसिद्ध विष्णुनाम
थाकथञ्चिद् येन न कीर्तितं श्रुतं वा स कोऽपि नास्ति। तस्माद्वि
ष्णुनाम, तच्च मया कीर्तितं श्रुतं स्मृतञ्चेति यस्य ज्ञान तस्यैव प
य इत्यङ्गीकर्तव्यम्' इति। 'अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम
सङ्कीर्तितमघं पुंसां दहत्येधो यथाऽनलः' ॥ इत्यादिवचनानि तु म
समयजातनामोच्चरणफलबोधकपराणीति न विरोधः।

ननु मरणसमये जातनामोच्चरणफलबोधकत्वपक्षे तत्समयेऽपि 'घर्घर' शब्दस्यावश्यं सर्वेषामपि जायमानत्वेन तस्यापि कथञ्चिद् यौगिकत्वसम्भवेन पुनरपि नरकस्थितिबोधकानां पुराणानां व्यर्थत्वमितिचेत् न, तत्समये यौगिकानामपि पुराणादिषु प्रसिद्धानामेव नाम्नां पापनाशकत्वमिति स्वीक्रियते। अत एव 'अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत्' इत्यत्र 'उत्तमश्लोकनाम यत्' इतिपदमुपादत्तम्। तस्यायमर्थः—यत्पुराणादिषु प्रसिद्धं यौगिकं रूढं वोत्तमश्लोकस्य भगवतो नामास्तीति। एवञ्च 'नारायणेति म्रियमाण उपैति मुक्तिम्' इत्यजामिलोपाख्यानीयं नारायणनामस्म्बन्धिवर्णनं साधु सङ्गच्छते।

सहस्रनामस्तोत्रघटकनाम्नां 'नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः' 'वेदान्तगो ब्राह्मणस्स्यात् क्षत्रियो विजयी भवेत्। वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात्' ॥ इत्यादीनि बहूनि फलानि प्रत्येकनाम्नो जपे न सम्भवन्त्येव, तत्र 'विष्णोर्नामसहस्रं मे शृणु पापभयापहम्' 'इतीदं कीर्तनीयस्य केशवस्य महात्मनः। नाम्नां सहस्रं दिव्यानां' ॥ 'भक्तिमान्यस्सदोत्थाय शुचिस्तद्गतमानसः। सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत्' ॥ इति सहस्रनामसमुदायस्यैव जपफलस्योक्तत्वात्। स्तोत्रघटकानां तेषां स्तोत्राद् बहिः प्रत्येकमुच्चरणे 'सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः। यद्याऽभिरोचते नाम तत्सर्वार्थेषु योजयेत्' ॥ इत्यादिवचनोक्तफलमस्त्येव। नन्वेकस्य नाम्नः सर्वप्रसिद्धावनेकेषां नाम्नामेकस्य वानेकवारमुच्चरणमनर्थकमिति चेन्न, एकस्यैकवारं भक्तिश्रद्धादियुक्तान्तःकरणेनोच्चरणे सञ्चितपापनाशः, तस्यावर्तनेऽन्येषां वोच्चारणे प्रारब्धानामपि केषाञ्चित् नाशः। यावज्जीवोच्चरणे तु साक्षादेव मुक्तिलाभ इति ध्येयम्।

ननु भगवद्वाचकानामपि नाम्नां कथमेतादृशी शक्तिर्यदनेकोपायसाध्यं पापनाशादिरूपं कार्यं तन्नामोच्चरणमात्रेण भवतीति चेदुच्यते। कर्मणामपि कथं पापनाशकत्वमिति विचारे वचनादेवेत्युत्तरं

पुरस्फुरति, तथैव वचनादेव सकृन्नामोच्चरणादपि पापनाशो भवतीत्यवश्यमङ्गीकार्यम्। किञ्चाधुनापि वृश्चिकसर्पविषबाधानिवारणे मन्त्राणां साक्षात्फलं दृश्यते यदि, तदा श्रीभगवन्नामरूपमन्त्रात्कथङ्कारं फलं न भवतीति वक्तुं शक्यम्। 'अचिन्त्या खलु ये भावा न तांस्तर्केषु योजयेत्' इति न्यायाद्यथैव भवेदिति समर्थोक्ते सति तत्तथैव भवतीत्यङ्गीकरणीयमेव श्रेयस्करम्। किञ्च 'यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत्। तथा वीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत्'॥ इतिरामपूर्वतापिनीययुक्त्या भगवन्नाम्ना सङ्कीर्त्यमानेन तन्नामवतो भगवतः प्रादुर्भावेनाखण्डशक्तिसम्पन्नस्य भगवत एव फलदायकत्वम्। एवञ्च नामाकर्षकं, भगवांश्चाकर्षणीय इति।

वस्तुतस्तु, नाम साक्षाद्भगवद्रूपमेव। स यथा मत्स्याद्यनेकावतारान् स्वीकुर्वन् साधूनां परित्राणं पापादिनाशं च विधत्ते, तथेदमपि। तस्य भगवतोऽवताराणामियत्ताया अभावात्। अयमर्थः श्रुतिपुराणादिषु सुस्पष्टतयोपलभ्यते। तत्र श्रुतौ प्रणवमुद्दिश्य 'ओमित्येतत् ब्रह्मणो नेदिष्ठं नाम यस्मादुच्चार्यमाण एव संसारभयात्तारयति' इति। 'मधुरमधुरमेतन्मङ्गलं मङ्गलानां सकलनिगमवल्लीसत्फलं चित्स्वरूपम्। सकृदपि परिगीतं हेलया श्रद्धया वा भृगुवर नरमात्रं तारयेत् कृष्णनाम'॥ इतिप्रभासपुराणे। 'व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम्। कृष्णाक्षरस्वरूपेण मुखेषु परिवर्तते'॥ इति नारदपञ्चरात्रे। 'नामचिन्तामणिः कृष्णश्चैतन्यरसविग्रहः। पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः'॥ इत्यादिना पद्मपुराणे च स्पष्टम्। श्रीभगवद्भक्तश्रेष्ठाचार्यश्रीरूपगोस्वामीचरणैरपि 'वाच्यं वाचकमित्युदेति भवतो नाम स्वरूपद्वयं पूर्वस्मात्परमेव हन्त करुणं तत्रापि जानीमहे' इत्यादिना विवृतम्। एवञ्च यथा जगद्धारणार्थं 'पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः'॥ इति स्मृत्युक्ताष्टमूर्तिभिः श्रीशिवोऽवतीर्य विलसति। तथैव 'तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव। यानि यानि च रोचन्ते स्वजनानामरूपि-

णः' ॥ इतिन्यायेन श्रीभगवान्परमकृपालुर्यशोदास्तनन्धयो दामोदरो द्रौपदीलज्जारक्षणार्थं वस्त्ररूपेण, गोकुले वत्सादिरूपेण, मन्दराचलधारणादिकर्मणि कमठादिरूपेणावतीर्णस्तथा सकलमनुजोद्धारार्थं नामरूपेणावतीर्ण इति। एवञ्च प्रारब्धपूर्वपुण्यपुञ्जेन नामरूपस्य भगवतः श्रीकृष्णादेर्मरणसमये नामरूपेण साक्षात्कारो भवेद्यदि, तदाऽजामिलवद्वश्यं मुक्तिलाभो भवेदिति निश्चितम् ।

ननु यदि नामरूपो भगवतोऽवतारस्तत्साक्षात्कारेण च मरणसमये मानवपरमकल्याणं तर्हि तथैवैकवारं यस्मिन्कस्मिन्समये नामोच्चरणे कुतो न मुक्तिलाभो, कुतो न तत्साक्षात्कारो, नामावर्तनस्य वा किं प्रयोजनमिति चेदुच्यते । रत्नकाञ्चनरजतादयः पदार्था यथा भूगर्भे लीना विना प्रयत्नेन न प्रादुर्भवन्ति, कदाचिच्च कालविशेषमहिम्ना स्वीयप्रयत्नं विनापि 'विदूरभूमौ नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव' इतिरीत्या प्रादुर्भवन्ति, तथैव पारवश्यमरणादिभिन्नस्थले नामरूपभगवदवतारसजातीयाक्षरावर्तनमावश्यकमेव, मरणादिसमये तु पूर्वपुण्यपुञ्जादेव कालविशेषमाहात्म्येन विना प्रयत्नं नामरूपभगवदवतारप्रादुर्भवेन सकलेष्टसिद्धिः। भगवदवताररूपनामतत्सजातीयतत्प्रापकनामद्वयकल्पनायां मूलन्तु 'गोविन्देति सदा वाच्यम्' 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्' इत्यादीनि शताधिकानि वचनानीत्यवधेयम् । एवञ्च यथाशक्ति वैदिकपौराणिकादिकानि कर्माणि स्वसम्प्रदायानुरोधेनाविरुद्धानि प्रत्यहमनुष्ठाय श्रद्धया भक्त्या ज्ञानेन च यावज्जीवं नामसहस्रस्यैकस्य वाभ्यसनं सकलेष्टसिद्धिः । मरणं यावन्नामस्मरणवैदिककर्मणां करण इदमेव फलं यन्मरणसमये नामरूपभगवतोऽजामिलवत्कीरवच्च साक्षात्कारेण भवितव्य, ततश्च परमश्रेय इति । उक्तञ्च–'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवति कौन्तेय सदा तद्भावभावितः' ॥ 'अन्ते मतिः सा गतिः' इति चेति शिवम् ।

च भगवद्विषयकफलवन्नामकीर्त्तनवचनानि श्रुतिस्मृतीतिहासपुराणोपपुराणसंहितागमस्थानि क्रमेण प्रदर्श्यन्ते। तत्र श्रुतयस्तावत्प्रदर्शिताः। अथ स्मृतयः। चवनस्मृतौ प्रायश्चित्तप्रकरणे—

श्रुतिस्मृतिपुराणेषु रामनाम समीरितम्।
तन्नामकीर्तनं भूयस्तापत्रयविनाशनम्॥ १॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम्।
नातः परतरं पुण्यं त्रिपु लोकेषु विद्यते॥ २॥
नामसंकीर्तनादेव तारकं ब्रह्म दृश्यते।

---

*भगवद्विषयकफलवन्नामेति*। भगवानेव विषयः, स एव फलं, तद्युक्तानीत्यर्थः। भगवद्विषयकानि फलयुक्तानि चेति वा। *प्रदर्शिताः*। पूर्वं भगवन्नामस्मरणस्य वेदमूलकत्वस्थापनप्रसङ्गे (पृ० ११, १७)। *पुण्यमिति*। पापनाशपूर्वकं पुण्योत्पादकमित्यर्थः। अथवा पुण्यरूपमिति। *कीर्तनादेवेति*। एवकारेणात्मज्ञाने यथा 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इतिश्रुत्यानेकानि साधनानि विहितानि, तथाऽत्र नापेक्षेति सूच्यते। *तारकं ब्रह्मेति*। ओङ्काररूपं सूक्ष्माष्टाक्षरमित्यर्थः। 'ओमित्येतदक्षरं परं ब्रह्म तदेवोपासितव्यम्। एतदेव सूक्ष्माष्टाक्षरं भवति। तदेतदष्टात्मकोऽष्टधा भवति। अकारः प्रथमाक्षरो भवति। उकारो द्वितीयाक्षरो भवति। मकारस्तृतीयाक्षरो भवति। विन्दुस्तुरीयाक्षरो भवति। नादः पञ्चमाक्षरो भवति। कला षष्ठाक्षरो भवति। कलातीता सप्तमाक्षरो भवति। तत्परतश्चाष्टमाक्षरो भवति। तारकत्वात्तारको भवति। तदेव तारकं ब्रह्म त्वं विद्धि। तदेवोपासितव्यम्'। इति तारसारश्रुतेः। अथवा पूर्वार्द्धमनस्कभेदेन द्विःप्रकारं, तथा मूर्त्यमूर्तिभेदेन च द्विःप्रकारं ब्रह्मप्रकाशकम्। 'तस्मात्तारक एव लक्ष्यमम-

माण्डव्यस्मृतौ—

सुरापो ब्रह्महा स्तेयो चौरो भग्नव्रतोऽशुचिः।
स्वाध्यायवर्जितः पापो लुब्धो नैष्कृतिकः शठः॥ ३॥
अव्रती वृषलीभर्ता कुनखी सोमविक्रयी।

---

नस्कफलप्रदं भवति। तत्तारकं द्विविधं, पूर्वार्द्धंतारकमुत्तरार्धंतारकममनस्कं चेति'। तथा 'तस्मादन्तर्दृष्ट्या तारक एवानुसन्धेयः। तत्तारकं द्विविधं मूर्तितारकममूर्तितारकञ्चेति। यदिन्द्रियान्तं तन्मूर्तिमत्। यद्भ्रूयुगातीतं तदमूर्तिमत्। सर्वत्रान्तःपदार्थविवेचने मनोयुक्ताभ्यास इष्यते। तारकाभ्यां सद्रूर्ध्वस्थसत्वदर्शनान्मनायुक्तेनान्तरीक्षणेन सच्चिदानन्दस्वरूपं ब्रह्मैव' इत्यादि शुक्लयजुर्वेदान्तर्गताद्वयतारकश्रुतेः। अस्मिन्पक्षे 'ब्रह्म दृश्यते' इत्युक्तिः सम्यक् सङ्गच्छते।

*स्तेय इति*। अत्र सुरापब्रह्महसाहचर्यात् 'स्तेय'इति पदेन सुवर्णस्तेयो ग्राह्यः। 'चौर' पदेन सुवर्णातिरिक्तस्तेयकर्ता।*भग्नव्रत इति*। पूर्वगृहीतव्रतत्यागी। 'पूर्वं व्रतं गृहीत्वा यो न चरेत्काममोहितः। जीवन् भवति चाण्डालो मृतः श्वा चाभिजायते'॥ इति छागलेयस्मृत्या तस्य चाण्डालत्वावगतेः। *अशुचिरिति*। 'सदा कुर्याद्धर्मकार्यमापद्यपि शुचिर्नरः'इतिटोडरानन्दधृतसप्तर्षिस्मृतेः शुचित्वस्य सर्वकर्मण्यधिकारिविशेषणत्वेनाशुचेः कर्मानर्हत्वात्। *स्वाध्यायवर्जित इति*। 'ब्रह्मज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात्' इति वसिष्ठस्मृतेः स्वाध्यायवर्जितस्य दोषास्पदत्वं ज्ञायते। *नैष्कृतिक इति*। दुर्वृत्त इत्यर्थः। *अव्रती*। शरीरपावकस्य कस्यापि व्रतस्याकर्ता। *वृषलीभर्तेति*। 'पितृगेहे तु या नारी रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः'॥ इति स्मृतिप्रसिद्धः। *कुनखीति*। 'हेमकारी तु कुनखी दुश्चर्मा गुरुतल्पगः' इति या-

सोऽपि मुक्तिमवाप्नोति विष्णोर्नामानुकीर्त्तनात् ॥ ४ ॥
विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।

---

ज्ञवल्क्यस्मृत्या कुनखिनः पूर्वजन्मनि ब्राह्मणसुवर्णस्तेयं कृत्वा प्रायश्चित्ताकरणेनेह जन्मनि तत्पापसूचकेदृशावस्थायुक्तत्वेन दोषास्पदत्वात् । *सोमविक्रयीति* । 'सोमविक्रये तप्तकृच्छ्रः पुनरुपनयनञ्च' इति प्रायश्चित्तेन्दुशेखरस्थवचनेनास्य दोषयुक्तत्वबोधनात् । *मुक्तिमिति* पूर्वोक्तसम्पूर्णदोषादित्यर्थः । अथवा स्वीयश्रद्धानामोच्चारणाद्यभ्यासानुसारिणीं सालोक्यादिकां मुक्तिमित्यर्थः। *विद्वेषादिति*। विशेषेण द्वेषादित्यर्थः । विशेषश्च सार्वकालिकत्वरूपः ।

ननु द्वेषकरणेन कथं चैद्यस्य मुक्तिः,मुक्तौ तु 'योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्'। इत्यादिना प्रोक्तेषूपायेषु द्वेषस्यानन्तर्भावात्, अन्तर्भावे वा वेनस्यापि मुक्तिः कुतो न जाता इतिचेदुच्यते, मुक्तावुपायेयत्ताया वक्तुमशक्यत्वात्। शिष्टाद्दृताष्टाङ्गयोगादीनामन्येषामुपायानां विद्यमानत्वात् । निर्दिष्टभगवद्वचनस्य तु नृणां श्रेयो विधातु प्रकृतग्रन्थे त्रयो योगा मया प्रोक्ताः, अन्योपायः प्रकृतग्रन्थे कुत्रचिदपि प्राधान्येन नोक्त इत्यर्थकरणान्न विरोधः। अथवा द्वेषस्यापि भक्तावन्तर्भाव. । ननु 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' ॥ इत्यादिना प्रोक्तेषूपायेषु तस्यानन्तर्भावादितिचेत् सत्यम् । एत उपायाः सात्विकप्रकृतेर्भक्तस्योक्ताः । अतिराजसस्यासुरप्रकृतेर्भक्तस्य तु विरोधिभक्तिरूपो द्वेष एक एवोपायः। अत एव श्रीवोपदेवेन 'विष्णुभक्तानां रौद्ररस' इत्यस्मिन्प्रकरणे शिशुपालस्य भक्तेष्वन्तर्भावः कृत सङ्गच्छते ।

अत्रायमभिप्रायः। श्रवणकीर्तनाद्युपायैर्मुक्तिर्भवतीत्यत्र किं प्रयोज-

शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः ॥ ५ ॥

---

कमितिविचारे यावत्पर्यन्तं श्रीकृष्णादिष्वाराद्ध्येषु चित्तस्य स्थितिरविचला नैव सञ्जाता तावदनुष्ठितेष्वपि श्रवणाद्युपायेष्वशक्यैव मुक्तिप्राप्तिः । एवञ्च स्वीयचेतसः स्थीरीकरणमेव मुख्यं मुक्तौ प्रयोजकम्। उपायः शास्त्रोक्तो भवतु मा वा भवतु । उक्तञ्च 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' इति । निवेशयेत्-नितरां-सर्वदा, वेशयेत्-स्थापयेदित्यर्थः । तथा च दमघोषपुत्रस्य शिशुपालस्य श्रीकृष्णे भगवति सर्वदा मनसः शत्रुभावनया लयेन तस्य मुक्तिर्जाता । उक्तञ्च 'जन्मत्रयानुगुणितवैरसंरब्धया धिया । ध्यायंस्तन्मयतां यातो भावो हि भवकारणम्' ।। एतेन 'द्वेषादयस्तु नैवम्' इति शाण्डिल्यसूत्रीयस्वप्नेश्वरभाष्ये चैद्यस्य तु द्वेषात्स्मृतिपूर्वकभक्त्या मुक्तिरिति प्रतिपादितं परास्तम् । अथवा य ईश्वरसामान्यद्वेषेणापि मुक्तिर्भवतीति कथयन्ति तान्प्रत्युक्तम, न चैद्यस्य द्वेषेण मुक्तिः किन्तु द्वेषाद् यावन्मरणं स्मरणेन श्रीकृष्णविषयकचेतसो द्रुतिरूपभक्तिप्रादुर्भावेन मुक्तिरिति योजनीयम । न च 'न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे' ॥ इति महाभारतीयवचनात् क्रोधादिर्नैव सम्भवतीति वाच्यम् । तत्र कृतपुण्यानामिति पदार्थपर्यालोचनया भगवत्प्रेमविषयककर्मजपुण्यवतां न क्रोधादिर्भवतीत्यर्थस्विकारेणादोषात् । सूत्रार्थस्तु सामान्यद्वेषादयो न मुक्तौ कारणमिति । वेनस्तु परमात्मानं द्विषन्नपि न सर्वदा, किन्त्वात्मानमेव सर्वश्रेष्ठं सर्वभोक्तारमित्यमन्यतेति 'बलिं च मह्य हरत मत्तोऽन्यः कोऽग्रभुक् पुमान्' 'अवजानन्त्यमी मूढा नृपरूपिणमीश्वरम्' इत्यादिना स्पष्टमन्यत्र । एवञ्च वेनस्य मनसः क्रोधादिष्वन्यतमरूपेणाद्रुतचित्तस्य भगवद्विषयिकाऽविच्छिन्ना वृत्तिर्नासीदिति तस्य न मुक्तिरिति । *स्वर्गमिति* । स्वः-स्वर्गं, गीयते-स्तूयत

याज्ञवल्कीये—

न तावत्पापमस्तीह यन्नाम्ना न हृतं हरेः ।
अतिरेकभयादाहुः प्रायश्चित्तान्तरं बुधाः ॥ ६ ॥

चतुर्वर्गचिन्तामणौ भगवन्तं प्रति रुद्रवाक्यम्—

त्वन्नामकीर्तनाद्विष्णो पूतः पूज्यो जनैरहम् ।
त्वं हंसि सर्वजन्तूनां मलं तेन हरिः स्मृतः ॥ ७ ॥

वैष्णवचिन्तामणौ नारदं प्रति युधिष्ठिरवाक्यम्—

श्रुतो धर्मो बहुविधो ह्यनन्तफलदो मया ।
नामसङ्कीर्तनफलं तदाचक्ष्व मुनेऽधुना ॥ ८ ॥

---

इति स्वर्गः-भगवान् श्रीकृष्ण इत्यर्थः । 'चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् । पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता' ॥ इति श्रीमद्भागवतोक्तेः । एतेन श्रीमद्भागवते तु श्रीकृष्णदेहे चैद्यदेहज्योतिर्लीनात्र तु स्वर्गं (स्थानविशेषं) गत' इत्युक्तमितिपरस्परविरुद्धमेतदिति कथनं परास्तम् ।

पृथिव्यां तादृक् पातकं नास्त्येव यन्नामातिरिक्तं स्वनाशायोपायमाकाङ्क्षेतेत्याह-*नतावदिति*। *अतिरेकभयादिति*। पुरुषाप्रवृत्तिरूपविशेषभीत्येत्यर्थः। *पूज्य इति*। अत्रापि 'त्वन्नामकीर्तनात्' इतिहेतुबोधकं पदं योजनीयम्। एवञ्च त्वन्नामकीर्तनात्पूतः पूज्यश्चेत्यर्थः। स्वीयपूतत्वानुभवेन त्वं पापनाशकर्तेति ज्ञातं, तथा हरिशब्देनापि तदेवायातीत्याह शिवः-*त्वं हंसीति* । *मलम्* । दोषम् । अथवा संसारम् । श्रीमदाचार्यशङ्करपादैर्विष्णुसहस्रनामभाष्ये 'केशवःकेशिहा हरिः' इति हरिशब्दविवरणसमये 'सहेतुकं संसारं हरतीति हरिः' इत्युक्तत्वात् । सर्वेषु फलदधर्मेषु भगवन्नामकीर्तनस्य श्रेष्ठत्वं प्रदर्शयितुमाह—*वै-

श्रुत्वा युधिष्ठिरवचः परया मुदा स
माहेदमाशु मुनिपुङ्गवनारदोऽपि ।
नामानुकीर्तनभरेण हरेर्नितान्त-
रोमाञ्चसंहतिविचित्रितसर्वकायः ॥ ९ ॥

श्रीनारद उवाच—

न देशनियमो राजन्न कालनियमस्तथा ।
विद्यते नात्र सन्देहो विष्णोर्नामानुकीर्त्तने ॥ १० ॥
कालोऽस्ति यज्ञे दाने वा स्नाने कालोऽस्ति सज्जपे ।
विष्णुसङ्कीर्तने कालो नास्त्यत्र पृथिवीपते ॥ ११ ॥
गच्छंस्तिष्ठन्स्वपन्वापि पिबन् भुञ्जञ्जपंस्तथा ।
कृष्ण कृष्णेति सङ्कीर्त्य मुच्यते पापकञ्चुकात् ॥ १२ ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।

---

ष्णवचिन्तामणाविति* । *परया मुदेति* । योग्यशिष्यलाभेन योग्य-प्रश्नकरणेन चानन्दप्राप्तिर्नारदस्येति ज्ञेयम् । परमानन्दचिह्नं दर्शयति *नितान्तरोमाञ्चे* । *देश* । 'एतान्द्विजातयो देशान्निवसेरन्प्रयत्नतः' इत्याद्युक्त आर्यावर्तादिः । *काल इति* । यथाऽऽधानादिषु 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिः कालोऽस्ति तथा नास्तीत्यर्थः। *यज्ञे दाने वेति* । यज्ञे कालः चातुर्मास्यादयः । दाने 'दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः' इत्यादिः स्मृत्युक्तः कालः । *जपे इति* । जपश्चात्र नामकीर्तनाद्यतिरिक्तः 'विष्णुसङ्कीर्तने कालो नास्त्यत्र पृथिवीपते' इत्यग्रिमवाक्यात् ।

सर्वयज्ञस्नानदानाद्यकरणेऽपि नामसङ्कीर्तनमात्रेण सर्वाणि फलानि भवन्तीत्याह—*स स्नात इति* । बह्वायाससाध्यस्मरणा-

सर्वदानफलं प्राप्तो यस्तु सङ्कीर्तयेद्धरिम् ॥ १३ ॥

उमाशिवसंवादे तां प्रति रुद्रवाक्यम्—

हिमवद्विन्ध्ययोर्मध्ये जना भागवता मताः ।
उच्चारयन्ति रामेति येन भागवतोत्तमाः ॥ १४ ॥
अजस्रं स्मरणं विष्णोर्बह्वायासेन साध्यते ।
ओष्ठस्पन्दनमात्रेण कीर्तनं तु ततो वरम् ॥ १५ ॥
ईशोऽहं सर्वजगतां नाम्नां विष्णोर्हि ज्ञापकः ।
सत्यं सत्यं वदाम्येव हरेर्नान्या गतिर्नृणाम् ॥ १६ ॥

कापिष्ठल्या प्रायश्चित्तप्रकरणे—

रामेति कीर्त्तनं राजन्सर्वरोगनिवारणम् ।

---

पेक्षया कीर्तनमेव श्रेष्ठं सुलभोपायसाध्यत्वात्, अतस्तदेवानुष्ठातव्यमित्यभिप्रायेण वचनं तद्बोधकं प्रदर्शयति-*हिमवदित्यादि* । *स्पन्दनमात्रेणेति*। मात्रपदेनापरासनादिशारीरक्रियाया व्यावृत्तिः। न तु मानसिकस्य सामान्यतः स्मरणादेः, तद्विना साधुनामोच्चरणस्याशक्यत्वात् । ननु तर्हि स्मरणात्कीर्तनस्य सुसाध्यत्वबोधनमसङ्गतम् । स्मरणे केवलस्य मनसो व्यापारस्यापेक्षा, कीर्तने तूभयस्येति चेत् । न । अखण्डस्मरणन्तु ध्येयविषयकचेतसस्सर्वदैकताननतारूपं, तत्तु कठिन, मनसश्चञ्चलत्वात् । कीर्तनन्तु किञ्चिद्ध्यानपूर्वकमोष्ठस्पन्दनमात्रम् । इम विशेष सूचयितुमेव 'अजस्र स्मरणम्'इत्युक्तम् । *ज्ञापकः*। बोधकः । स्वकीयबोधकत्वमेव प्रतिज्ञया प्रकटयति—*सत्य सत्यमिति* । *हरेरिति* । हरिनाम्न इत्यर्थः । *गतिः* । मोक्षोपायः ।

स्मृतिकारैः प्रायश्चित्तप्रकरण एव नामस्मरण प्रायश्चित्तरूपेणोपात्तमिति प्रदर्शयति-*प्रायश्चित्तप्रकरण इत्यादि* । न तु के-

प्रायश्चित्तं हि पापानां मुक्तिदं सर्वदेहिनाम् ॥ १७ ॥

अथेतिहासाः, तत्र महाभारते—

नमस्ते सर्वलोकात्मन्नारायण परात्पर ।

मनोमलात्तपोऽशक्यं कर्म चाविद्यया हतम् ॥ १८ ॥

दानमप्यर्थदोषेण नाम तस्मात्कलौ स्मरे ।

---

वलं पापनिवर्तकं किन्तु रोगनिवारणं मुक्तिदमपीत्याह—*रोगनिवारणमिति* । *मुक्तिदमिति*। 'पापानां'इत्यत्र बहुवचनेन प्रायश्चित्तमित्यत्रैकवचनेनेदं सूच्यते, यत्–प्रतिपापं भिन्नानि श्रुत्याद्युक्तानि प्रायश्चित्तानि नामोच्चारणन्तु सम्पूर्णानां पापानामेकरूपमेवेति । किञ्चान्यत्र यथा पापरोगनिवारणस्य मुक्तिसम्पादनस्य चानेके भिन्ना उपाया विद्यन्ते परन्त्वत्र तु पापनाशार्थं कृतेन नामोच्चारणेनैव रोगनिवारणं मुक्तिसम्पादनं च भवतीति नामोच्चारणं सर्वश्रेष्ठमिति । स्मृतीः प्रदर्श्येतिहासान्प्रदर्शयितुमाह—*अथेतिहासा इति* । अत्रेतिहासपदेन 'अत्रोदाहरन्तीममितिहासं पुरातनम्' इतिवत् कथानकादिकं नैव स्वीक्रियते, किन्तु पूर्वं 'नामकीर्तनवचनानि श्रुतिस्मृतीतिहासपुराणोपपुराणसंहितागमस्थानि क्रमेण प्रदर्श्यन्ते' इत्युक्तत्वात् कथानकस्थानि नामस्मरणस्य श्रेष्ठ्यप्रतिपादकानि वचनानीति ज्ञेयम् ।

*सर्वलोकात्मन्निति* । सर्वलोकस्वरूपेत्यर्थः । 'आत्मैवेदं सर्वम्' इति श्रुतेः । अथवा सर्वलोकेषु आत्मा–स्वरूपमन्तर्यामितया यस्येत्यर्थः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इतिश्रुतिस्मृतिभ्याम् । *परात्परेति* । बुद्धेः परेत्यर्थः । 'मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः' इतिश्रुतेः । *तप इति* । कायिकवाचिकमानसिकरूपं त्रिविधम् । *अविद्ययेति* । कर्मविषयकाज्ञानेनेत्यर्थः । *अर्थदोषेणेति* । दानीयद्रव्यदोषेणेत्यर्थः । स च दोषो

त्वामेकमाहुः पुरुषं त्वामाहुः सर्वतोमुखम् ॥ १९ ॥
नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ।
नारायणपरा वेदा यज्ञा नारायणार्थकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ २० ॥

---

निषिद्धदातृप्रतिग्रहलब्धत्व–निषिद्धदेशोत्पन्नत्व–दत्तपुनर्दानप्रसङ्गत्वादिरूपः । *कलाविति* । कलौ नामस्मरणेनैव तपःकर्मदानादिप्राप्यफलप्राप्तिरित्यर्थः । उक्तञ्च 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्' ॥ इति । *पुरुषमिति* । परमात्मानमित्यर्थः । 'क्व कर्मप्रध्वस्तं फलति पुरुषाराधनमृते'इति शिवमहिम्नस्तोत्रे पुरुषशब्दस्य परमात्मनि प्रयोगात् । *सर्वतो मुखमिति* । सर्वत' श्रेष्ठम् । 'मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः' इतिहैमकोषात् । अथवा सर्वस्य श्रोतारं द्रष्टारञ्च । व्यापककारणत्वस्येदमुपलक्षणम् । उक्तञ्च नृसिंहपूर्वतापिन्यामुपनिषदि– 'अथ कस्मादुच्यते सर्वतोमुखमिति । यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि स्वयमनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते सर्वग. सर्वगतस्तिष्ठति । एकः पुरस्ताद्य इद बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये नमामि तमहं सर्वतोमुखमिति तस्मादुच्यते सर्वतोमुखमिति' इति । *बहुविधैरिति* । गौणैर्मुख्यैश्चेत्यर्थः । *प्रयता इति* । पवित्रा इत्यर्थः । 'पवित्रः प्रयतः पूतः' इत्यमरः । *परा वेदा इति* । सर्वेषां साक्षात्परम्परया वेश्वर एव प्रतिपाद्यः । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः । *नारायणार्थका इति* । नारायण एवार्थः—प्रयोजनं येषान्त इत्यर्थः । 'आकाशात्पतितं तोयं यथा गच्छति सागरम्' इति न्यायादित्यर्थः । एवमग्रेऽपि ।

पापात्मानः क्रोधरागादिभूताः
कृष्णे भक्ता नाम सङ्कीर्तयन्तः ।
पूतात्मानो यज्ञशीलाः सुमेधाः
यज्ञस्यान्ते कीर्त्य लोकान् व्रजन्ति ॥ २१ ॥
सर्वान्यज्ञान्ब्राह्मणान्ब्रह्मणैव
व्याप्यातिष्ठद् देवदेवस्त्रिलोके ।

---

*पापात्मान इति* । ये कृष्णे भक्तास्तथा नामसङ्कीर्तनपरायणास्ते पापक्रोधादियुक्ता अपि पूताः शोभनधियश्च सन्तो यज्ञस्यान्ते नारायणं सङ्कीर्त्येष्टलोकं गच्छन्तीदृशं नामस्मरणमाहात्म्यमित्यर्थः । अत्र 'कृष्णे भक्ता' इति पदेन प्राकृता भक्ता एव ग्राह्याः, न तु 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः'।इत्यादि लक्षणलक्षितो भागवतोत्तमः, तस्य यज्ञप्राप्यलोकान्तरगमनाभावात्। अत एव 'यज्ञशीला' इत्यादिविशेषणमुपात्तम् । *सुमेधाः* । अत्रार्षत्वात् 'नित्यमसिच् प्रजामेधयोः' इत्यसिच्प्रत्ययो न जातः । अथवार्षमेकवचनम् । *कीर्त्येति* । अत्र समासाभावेऽपि ल्यप्प्रत्ययकरणमार्षम् । अथवा 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वक्तव्यः' इतिवार्तिकेन 'संङ्कीर्त्य' इति पदघटकस्य 'सं' पदस्य लोपे रूपस्य साधुत्वम् । 'सीतायाः पतये नमः' इत्यादिप्रयोगाणां साधुत्वार्थं तस्य वार्तिकस्य विशेषप्रकरणासम्बद्धत्वमावश्यकम् । एवमग्रेऽपि 'व्याप्यातिष्ठत्' इत्यादिरूपेषु ज्ञेयम् । केवलं कृष्णनामाभिधानात् त्रिलोके विशालान्कामान् मनुजः प्राप्नोति, कृष्णस्य सर्वत्र व्यापकत्वादित्याह—*सर्वान्यज्ञानिति* । *ब्रह्मणैवेति* । स्वीयरूपेणेत्यर्थः । *देवदेव इति* । देवानामपि देवः । श्रीकृष्ण इत्यर्थः । स च सर्वैर्देवैस्स्तुत इत्यादि श्रीमद्भागवते स्पष्टम् ।

सर्वान्कामान्प्राप्नुवन्ते विशालान्

स्त्रैलोक्येऽस्मिन् कृष्णनामाभिधानात् ॥ २२ ॥

ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषोत्तमम् ।

तान्स्पृष्ट्वा चाथवा दृष्ट्वा नरैः पापैः प्रमुच्यते ॥ २३ ॥

श्रीकृष्णं प्रति शिववाक्यम्—

नामानि तव गोविन्द यानि लोके महान्ति च ।

तान्येव मम नामानि नात्र कार्या विचारणा ॥ २४ ॥

यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ।

---

*ये पठन्तीति* । *तान्स्पृष्ट्वा चाथवा दृष्ट्वेति* । ननु नारायणनामपठनादिना सर्वपापमुक्तिर्भवतु, परन्तु नामस्मरणादिकर्तुर्दर्शनस्पर्शनमात्रेण कथं सर्वपापविनिर्मुक्तिरितिचेदुच्यते । भगवन्नामस्मरणे पापनाशः कथं भवतीति विचारे 'नामचिन्तामणिः कृष्णश्चैतन्यरसविग्रहः । पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः' ॥ इति पाद्मीयवचनेन नामनामिनोरभिन्नत्वेन यथा श्रीकृष्णचन्द्रप्रादुर्भवे नास्त्येव तत्र पापस्थितिर्यथा वा तद्रूपभूतनामप्रकाशसमयेऽपि पापस्थितिर्न भवतीत्युच्यते, तथैव श्रीकृष्णचन्द्रनामरूपस्वरूपधारिणः पुरुषस्य दर्शनेऽथवा साक्षात्स्पर्शने तयैव युक्त्या पापसम्भवः सर्वदाऽशक्य एवेति दिक् । यानि लोके श्रीगोविन्दस्य परमतत्त्वबोधकान्यत एव महान्ति नामानि विद्यन्ते तानि सर्वाण्यपि शिवस्य नामानि । उभयोरेकतत्त्वात्मकत्वादित्याह—*नामानीति* । *कृष्णेति* । द्रौपदीत्यर्थः । 'कृष्ण' सत्यवती पुत्रे वायसे केशवेऽर्जुने। कृष्णा स्याद्द्रौपदी'इति विश्वकोषात् । *दूरवासिनमिति* ।

ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ॥ २५ ॥

श्रीमद्भगवद्गीतायाम्—

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ २६ ॥

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ २७ ॥

---

द्वारकास्थानस्थितमित्यर्थः। क्वचित्कृष्णमितिपाठः । *ऋणमेतदिति* । यावत्पर्यन्तं भक्ताभिलषितं नैव पूरितं तावत्पर्यन्तं तदृणवदेव भगवत्यस्तीत्यर्थः । *सततमिति* । सततं—सर्वदा, स्तोत्रमन्त्रादिभिः कीर्तयन्तः—वर्णयन्तः केचिन्मामुपासते । दृढानि व्रतानि—नियमा येषां तादृशास्सन्तो यतन्तश्च—ऐश्वर्यज्ञानादिषु प्रयत्नं कुर्वन्तः केचित्, केचिद्भक्त्या नमस्यन्तश्च—प्रणमन्तः, अन्ये नित्ययुक्ता अनवरतमवहिताः सेवन्ते । 'भक्त्या' 'नित्ययुक्ता' इति पदद्वयं कीर्तनादिष्वपि योजनीयम् ।

*स्थाने हृषीकेशेति* । 'स्थाने' इत्यव्ययं युक्तमित्यस्मिन्नर्थे । हे हृषीकेश—श्रीकृष्ण, यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्चातस्तव प्रकीर्त्या—माहात्म्यसङ्कीर्तनेन न केवलमहमेव प्रहृष्यामीति किन्तु जगत्सर्वं प्रहृष्यति—प्रकर्षेण हर्षं प्राप्नोति, एतद्युक्तम् । तथा जगदनुरज्यते च—अनुरागमुपैति, इति यत्, तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति—पलायन्त इति यत्, सर्वे तपोमन्त्रादिसिद्धानां सङ्घाः—समुदायाः, नमस्यन्ति—प्रणमन्ति यत्, एतच्च सर्वमपि स्थाने-

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥२८॥
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ २९ ॥

तत्रैव वासुदेवो युधिष्ठिरं प्रति—

सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः ।
सर्वं नुदति तत्पापं भावयञ्छिवमात्मना ॥ ३० ॥

---

योग्यं न चित्रमित्यर्थः । *अनन्यचेता इति* । नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी, सततं-सर्वदा यो मां-परमेश्वरमनेकनामभिर्नित्यशः स्मरति । 'सतत' 'नित्यशः' इति पदद्वयेन नैरन्तर्यदीर्घकालत्वमुच्यते, एवञ्च न किञ्चित्कालं, किं तर्हि यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः । तस्य योगिनोऽहं सुलभः-सुखेन लभ्यः, नित्ययुक्तस्य-सदा समाहितस्य योगिनः, यत एवमतोऽनन्यचेताः सन्मयि सदा समाहितो भूत्वा नाना नामभिः स्मरणं कुर्या इति भावः। *अभ्यासयोगयुक्तेनेति* । मयि चित्तसमर्पणभूतो नामोच्चारणादिभिरेकस्मिंस्तुल्यवृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः, स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन चेतसा, नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि, तेन परमं-निरतिशयं पुरुष-परमात्मानं, दिव्यं-दिवि सूर्यादिमण्डले स्थितं, याति-गच्छति, अनुचिन्तयन्-शास्त्राचार्योपदेशमनुध्यायन्नित्यर्थः ।

*तत्रैवेति* । श्रीमद्भारत एवेत्यर्थः । लौकिकसर्वशोभनगुणरहितत्वे सर्वपातकयुक्तत्वेऽपि च हृदि शिवादि यदा भावयति तदा तत्सर्वं पातकं नश्यतीत्याह—*सर्वलक्षणहीनोऽपीति* ।

श्रीकृष्णं प्रत्युपमन्युः—

नमस्त्रिरूपधाराय यज्ञविध्वंसनाय च ।
नमस्त्रिपुरहर्त्रे च कालदण्डधराय च ॥३१॥
नमो भवाय शर्वाय विश्वरूपाय वै नमः ।
ईशानाय भवघ्नाय विश्वेशाय नमो नमः ॥३२॥
शिवमेभिस्तुवन् देवं नामभिः पुष्टिवर्धनैः ।
नित्यमुक्तः शुचिर्भक्तः प्रोत्यात्मानमात्मना ।
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ॥३३॥

भीष्मः—

एवं स्तुवन्नरो राजन्सदा नारायणं विभुम् ।
यमलोकं न पश्येत्तु नरकान्स्तु कुतः पुनः ॥३४॥

---

*उपमन्यु इति* । परममाहेश्वरः श्रीकृष्णं प्रति शिवसहस्रनामोपदेष्टा । *त्रिरूपधारायेति* । धरतीति धरः, धर एव धारः प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । ब्रह्मविष्णुशिवरूपधारिणे परमशिवायेत्यर्थः । *यज्ञविध्वंसनाय च* । दक्षयज्ञस्य वीरभद्रद्वारा नाशकायेत्यर्थः । *पुरहर्त्रे इति* । त्रिपुरासुरत्रिपुरनाशकाय । *कालदण्डधरायेति* । मार्कण्डेयनाशार्थमागताय यमाय दण्डदात्र इत्यर्थः । *भवघ्नाय* । भक्तानां संसारनाशकाय । *पुष्टिवर्धनैः* । भक्त्यादिसकलमुक्त्युपयोगिगुणवर्धकैरित्यर्थः । 'त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्' इति मन्त्रवर्णात्तस्य पुष्टिवर्धनत्वे तस्य नाम्नां पुष्टिवर्धनत्वं युक्तमेव । *प्रोत्यात्मानमात्मनेति* । स्वेनात्मरूपो भूत्वेत्यर्थः । *परमं ब्रह्मेति* । शक्त्युन्मेषरहितमित्यर्थः । *कुतः पुनरिति* । यमलोके नरकाणां विद्यमानत्वेन

गृणन्नपि स्तुवन्नित्यं स्मरन्नपि युधिष्ठिर ।
सर्वपातकजान्मृत्योर्मुच्यते सर्वकिल्बिषात् ॥३५॥
कलेर्दोषनिधेराजन्नस्ति ह्येको महान्गुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥३६॥
अहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम् ।
कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान् ॥३७॥
स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः ।
विष्णोः संपूजनान्नित्यं सर्वं पापं प्रणश्यति ॥३८॥

---

तत्र गमनाभावात्तद्दर्शनाभाव इत्यर्थः । *गृणन्निति* । केवलं नामोच्चरन् । *स्तुवन्निति* । गुणवर्णनपूर्वकं नामोच्चरन्नित्यर्थः । *स्मरन्निति* । कण्ठोष्ठादिव्यापाररहितं चिन्तयन्नित्यर्थः ।

*पातकजेति* । पापजन्यमृत्युनैव सकलं ग्रस्तं भवति । उक्तञ्च 'अनध्यायेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति' ॥ इति । विष्णुपुराणेऽपि 'वर्धमाने च पातके । द्वन्द्वाभिभवदुःखार्तास्ता भवन्ति ततः प्रजाः' ॥ इति । सर्वयुगापेक्षया दोषयुक्तमपि कलियुगं श्रेष्ठं, नामस्मरणेनैव सकलपापनाशनादित्याह—*कलेर्दोषनिधेरिति* । उक्तञ्च 'कलिं स भाजयन्त्यार्या गुणज्ञाः सारभागिनः । यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते' ॥ तथा 'कृतादिषु प्रजा राजन्कलाविच्छन्ति सम्भवम् । कलौ खलु भविष्यन्ति नारायणपरायणाः' ॥ इति । *मुक्तसङ्ग इति* त्यक्तसंसारसङ्ग इत्यर्थः । *परं* । परमात्मानम् । *विष्णोः सम्पूजनादिति* । पूर्वं विष्णोस्तवनान्मनुष्यो निष्पापः—पापसंयोगरहितो भवति, विष्णोः पूजनात्तु पापमेव नश्यति । तेन न पुनः पापसंयोग-

संसारसर्पसंदष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥३९॥
ब्राह्मणः श्वपचीं भुञ्जन्विशेषेण रजस्वलाम् ।
अन्नं च सुरया पक्वं मरणे हरिमुच्चरेत् ॥ ४० ॥

भारतविभागे—

न कलिर्न च कालाख्यो न च शक्रकृतं भयम् ।
न च मृत्युभयं तस्य विष्णोर्नामानुकीर्तने ॥४१॥

कृष्णेरताः कृष्णमनुस्मरन्ती-
रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते भिन्नदेहाः प्रविशन्ति कृष्णं
हविर्यथा मन्त्रहुतं हुताशम् ॥ ४२ ॥

---

शङ्काऽपि । *संसारसर्पेति* । संसार एव सर्पस्तेन सन्दष्टोऽत एव नष्टचेष्टो यस्तस्य मुख्य भेषजमित्यर्थः । *वैष्णवमिति* । विष्णुप्रापकमित्यर्थः । अत्यन्तपातकिनोऽपि ब्राह्मणादेर्मरणसमये यदि नाम निष्क्रामति मुखात्तर्हि सोऽपि मुक्तो भवतीत्याह—*ब्राह्मण इति* । अत्र 'सोऽपि मुक्तः शुभाल्लोकान्प्राप्नुयात्पुण्यकर्मणाम्' इति वाक्यशेषो बोध्यः । अन्येषु तपश्चर्यादिकर्मसु स्वपदनाशभीतियुक्तशक्रकर्तृकभयसम्भावनास्ति, तथा मृत्योः कलेः कालस्य च भीतिरस्ति, परन्तु मन्त्रजपे तु तत्किमपि नास्तीत्याह—*न कलिर्न च कालाख्य इत्यादि* ।

सर्वदा कृष्णभजनमेव कर्तव्यमित्याह—*कृष्णमित्यादि* । *भिन्नदेहा इति* । देहेभ्यो भिन्ना भिन्नदेहाः । राजदन्तादेराकृतिगणत्वात्सिद्धिः । अथवा भिन्नाः-नष्टा देहा येषामित्यर्थः । कृष्णतनौ

प्राणप्रयाणपाथेयं संसारव्याधिभेषजम् ।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥४३॥

मातृहा पितृहा गोघ्नो ब्रह्महाऽऽचार्यहापि च ।
श्वादः पुल्कसको वापि शुद्ध्येरन् कृष्णकीर्तनात् ॥४४॥

---

प्रवेशेऽनुकूलं दृष्टान्तमाह-*हविर्यथा मन्त्रहुतमित्यादि*। *हुताशम्*। अग्निम् । *प्राणप्रयाणेति*। प्राणानां प्रयाणे-गमने पाथेयं—शम्बलम्। *संसारेति*। संसार एव व्याधिस्तस्यौषधम् । *दुःखेति*। दुःखशोकाभ्यां रक्षकम् । *अक्षरेति*। अनेनार्थज्ञानं विनाऽपि पठनमात्रेण फलसिद्धिर्भवतीति सूचितम् । *श्वाद इति*। चाण्डालः । *पुल्कसक इति*। 'जातो निषादाच्छूद्रायां जात्या भवति पुल्कस' इति स्मृतिप्रसिद्धः ।

ननु ब्राह्मणादयो मातापित्रादिहन्तारः शुद्ध्यन्तु, तेषां पातकयुक्तत्वात्, परन्तु चण्डालपुल्कसादीनां स्वीयजातीयकर्मकर्तृणामिह जन्मनि पापाभावात्कथं पापाच्छुद्धिरित्युच्यत इति चेन्न । तेषामिह जन्मनि कदाचित्पापाभावेऽपि चण्डालपुल्कसकादिजातीयदेहप्राप्तिस्तु विना पापं नैव भवति । उक्तञ्च 'चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्' तादृशं जीवात्मनि विद्यमानं पापं कृष्णकीर्तनान्नष्टं भवतीत्यभिप्रायः । अथवा श्वादपुल्कसकादिपदानां श्वानमत्ति, पुष्कसक इवेति व्युत्पत्त्या ब्राह्मणादिपरत्वम् । ब्राह्मणादिकानामपि तादृशजातीयव्यवहारकरणात्तादृशजातीयशब्दप्रयोज्यत्वं, तथा शापादिनापि विभिन्नजातीयत्वं च दरीदृश्यते । यथा वाल्मीकऋषेर्नारददर्शनात्पूर्वं तादृशजातीयकर्मकरणेन तादृशशब्दव्यवहारः । कल्माषपादराज्ञो वशिष्ठशापान्मनुष्यभ-

हरिवंशे—

शयनोदुत्थितो यस्तु कीर्तयेन्मधुसूदनम्।
कीर्तनात्तस्य पापानि नाशमायान्त्यशेषतः॥४५॥

इतिहासोत्तमे—

यन्नाम्नि कीर्त्तिते विष्णोर्यस्य पुंसो न जायते।
सरोमपुलकं गात्रं स भवेत्कुलिशोपमः॥४६॥

तत्रैव वसिष्ठशतद्युम्नसंवादे वसिष्ठवाक्यश्रवणाच्छतद्युम्नवाक्यम्—

विष्णोर्नाम च तेनोक्तं शृणोपि भगवन्यदा।
शापदेहमिमं विप्र परित्यक्तासि वै तदा॥ ४७॥
तस्य सर्वेश्वरस्य त्वं यन्नामस्मरणाद्धरेः।
सत्क्षीणसर्वपापःसंस्ततः स्वं पुरमेष्यति॥४८॥

तत्रैव शौनकं प्रति भृगुवाक्यम्—

---

क्षकरादसजातीयत्वञ्च। *शयनादिति*। इदमुपलक्षणं सम्पूर्णव्यवहाराणां, नानावचनानां समन्वयात्। भगवद्भक्तस्य सरोमपुलकं गात्रं गद्गदस्वरो भक्त्या यदा भवति स एव चिह्नं पापनाशकभगवत्प्रादुर्भावेन चित्तशुद्धेः। उक्तञ्च 'कथं विना रोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः' ॥ इत्यभिप्रेत्याह—*यन्नाम्नीत्यादि*। नाममाहात्म्यसङ्ग्रहेऽस्य वचनस्य सङ्ग्रहस्तु भगवन्नाम्ना चित्तशुद्धिसूचकरोमाञ्चादेःप्रादुर्भावो भवतीति बोधनार्थं इति बोध्यम्।

*वसिष्ठशतद्युम्नेति*। वसिष्ठप्रेरणया सन्तुष्टः शतद्युम्ननृपः शापावधिमाह—*शापदेहमिति*। शापयुक्तदेहमित्यर्थः। *तत्रै-

नरके पच्यमानानां नराणां पापकर्मणाम् ।
मुक्तिः सञ्जायते यस्मान्नामसङ्कीर्तनाद्धरेः ॥४९॥

तत्रैव नारकान्प्रति पुष्करवाक्यम्—

सकृत्सङ्कीर्तितो देवः स्मृतो वा मुक्तिदो नृणाम् ।
कृतज्ञोऽसौ घृणी शश्वत्स कथं वो न संस्मृतः ॥५०॥
किमत्र हाहाकारेण युष्माकमधुना हरिम् ।
स्मरताहर्निशं विष्णुमशेषदुरितापहम् ॥ ५१ ॥
अहमप्यत्र नामानि कीर्तयामि जगत्पतेः ।
तानि वः श्रेयसे नित्यं भविष्यन्ति न संशयः ॥ ५२ ॥

तत्रैव पुनः भृगुवाक्यम्—

श्रुत्वा नामानि तत्रस्थास्तेनोक्तानि हरेर्द्विज ।
नारका नरकान्मुक्ताः सद्य एव महामुने ॥५३॥
मुक्तिश्च नरकाद्विष्णोर्नामसङ्कीर्तनादिह ।

---

वेति* । इतिहासोत्तम एव । *नरके पच्यमानानामिति* । यद्यपि 'प्रारब्धकर्मणां भोगादेव क्षयः' इति वचनेन प्रारब्धकर्मनाशे न केषाञ्चिदपि ज्ञानादीनां सामर्थ्यमिति ज्ञायते तथापि 'नरके' इति वचने 'पच्यमानानाम्' इत्यत्र लटः स्थानीयशानच्प्रत्ययेन नामस्मरणेन वर्तमानकालिकदुःखमुपभुञ्जानानामपि जनानां दुःखदायकप्रारब्धकर्मणोऽपि नाशो भवतीति बोध्यते । स्वयं नामोच्चरणे प्रारब्धदुःखादसमर्थोऽप्यन्योच्चरितनामश्रवणादपि दुःखमुक्तो भवतीत्याह—*सकृत्सङ्कीर्तितो देव इति*। *कृतज्ञ इति* । भक्तकृतनामस्मरणोपकृतिज्ञानवान् । *घृणी* । दयालुः । हरिनामस्मरणस्यातीव सामर्थ्यमस्ति, तत्साम-

यथा वै जायते विद्वँस्तथा चोक्तं तवानघ ॥५४॥
श्वादोऽपि हि न शक्नोति कर्तुं पापानि यत्नतः ।
तावन्ति यावता शक्तिर्विष्णुनाम्नोऽशुभक्षये ॥५५॥
स्वप्नेऽपि नामस्मृतिरादिपुंसः
क्षयं करोत्याहितपापराशेः ।
प्रयत्नतः किं पुनरादिपुंसः
सङ्कीर्तिते नाम्नि जनार्दनस्य॥५६॥
श्रुतं सङ्कीर्तितं वापि हरेराश्चर्यकर्मणः ।
दहत्येनांसि सर्वाणि प्रसङ्गात्किन्न भक्तितः ॥५७॥

विष्णुधर्मोत्तरे—

रमते सह रामाभिः प्राप्य विद्याधरं पदम् ।
अस्य भावनया नाम्नः कीर्तनादपि भार्गव ॥५८॥
माङ्गल्यं सर्वपापघ्नमायुष्यं तापशोधनम् ।

---

र्य्यंतुल्यं पातकमेव नास्तीत्याह*-श्वादोऽपीति* । अयत्नतः स्वप्नेऽपि यदि कथञ्चिन्नामस्मरणं कृतं भवेत्तदाऽपि सम्पूर्णपातकं नष्टं भवति, तदा जाग्रदवस्थायां प्रयत्नोच्चारिनात् किमु वक्तव्यमित्याह-*स्वप्नेऽपीति*। क्वचित्पापराशिमिति पाठः । *आहितेति* । स्थापितपापसमुदायस्येत्यर्थः । अन्यप्रसङ्गत उच्चरिताच्छ्रुतादपि पापनाशो भवतीत्याह—*श्रुतमिति* । *सर्वाणीति* । अत्र नामानीति शेषः । *भावनयेति* । तदाकारचेतसा । *माङ्गल्यमिति* । मङ्गलं विष्णुस्तत्सम्बन्धि । 'मङ्गलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः' इति वचनात् । अथवा मङ्गलाधायकम् । 'सर्वेष्वारब्धकार्येषु नास्ति

भुक्तिमुक्तिप्रदं पुण्यं वासुदेवस्य कीर्तनम् ॥५९॥

आर्ता विषण्णाः शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्त्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥६०॥

येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम् ।
कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान् ॥ ६१ ॥

यथाग्नौ जलं वह्नेस्तमसो भास्करोदयः ।
शान्तिः कलेरघौघस्य नामसङ्कीर्तनाद्धरेः ॥ ६२ ॥

---

तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः' ॥ इति वचनात् । *आयुष्यम्* । आयुर्वर्धकम् । *तापशोधनमिति* । आधिभौतिकाधिदैविकाध्यात्मिकतापत्रयशोधनमित्यर्थः । *भुक्तिमुक्तिप्रदमिति* । ऐहिकसुखनित्यपारलौकिकसुखप्रदातारम् । 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' इति भगवदुक्तेः । तथा 'भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः । योऽसौ विश्वम्भरो देवः स भक्तान् किमुपेक्षते' ॥ इति शौनकवचनाच्च । अत्र भोजनाच्छादनपदं सर्वस्योपलक्षकं भक्तपदसान्निध्यात् । *आर्ताः* । शत्र्वादिभिः पीडिताः । *विषण्णाः* । इष्टवस्तुनाशात् खिन्नाः । *शिथिलाः*। निश्चयरहिताः ।

*अलमिति* । पर्याप्तम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । *अघौघस्येति* । भास्करोदयेन तमसो नाशेऽपि पुनस्तस्य प्रादुर्भावो दुर्निवारः, तद्दृष्टान्तेन पापस्यापि पुनः प्रादुर्भावो भवेदिति शङ्का निवारणार्थं 'अघौघ' इति पदमुपा-

नामसङ्कीर्तनं विष्णोः क्षुत्तृट्प्रस्खलितादिषु ।
यः करोति महाभाग तस्य तुष्यति केशवः ॥ ६३ ॥
नामसंकीर्तनं कृत्वा क्षुत्तृट्प्रस्खलितादिषु ।
वियोगं शीघ्रमायाति सर्वानर्थैर्न संशयः ॥ ६४ ॥

नारदं प्रति श्रीभगवद्वाक्यम्—

कान्तारवनदुर्गेषु कृत्स्नास्वापत्सु सम्भ्रमे ।
दस्युभिः सन्निरुद्धश्च नामभिर्मां प्रकीर्तयेत् ॥ ६५ ॥

तस्मात्त्वयैतत्सततं निशासु
दिनेषु चैवेश्वरमाधवस्य ।
सङ्कीर्त्तनं कार्यमशेषपाप—
वियोक्तहेतोरभवाय चैव ॥ ६६ ॥

शिवं प्रति श्रीभगवद्वाक्यम्—

सत्यं ब्रवीमि ते शम्भो गोपनीयमिदं मम ।

---

रम् । तेन च निःशेषस्य पापस्य नाशकं नामेति बोधितम् । *क्षुत्तृ-डित्यादि* । एतेन नामोच्चारणे विधिराहित्यं सूच्यते । *वियोगमिति* । सम्बन्धाभावम् । *कान्तारमिति* । महारण्यम् । 'महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्' इत्यमरः । *दुर्गेष्विति* । अनेकसङ्कटेषु । *कृत्स्नास्वापत्स्विति* । पूर्वोक्तेभ्योऽनुक्तास्वापत्तिष्वित्यर्थः । *सम्भ्रम इति* । भीतौ । 'सम्भ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि' इति मेदिनी । *अभवायेति* । मोक्षायेत्यर्थः । अनेन सन्दर्भेण सर्वास्ववस्थासु सर्वस्मै प्रयोजनाय नामस्मरणं कर्तव्यमिति बोधितम् । सर्वेषु नामसु कृष्णनाम मूलसञ्जीवनमत एव गोपनीयमित्याह—*सत्यमि-

मृत्युसञ्जीविनीं नाम कृष्णाख्यमवधारय ॥ ६७ ॥

सौरधर्मोत्तरे—

क्वचिद्भगवतो नाम न त्वया कीर्तितं मुदा ।
येन संसारचक्रेऽस्मिन् मुहुर्दु भ्राम्यसेऽनघ ॥ ६८ ॥

भविष्योत्तरे—

कायेन मनसा वाचा सुमहद्दुष्कृतं कृतम् ।
रामेरामेति सङ्कीर्त्य सद्यस्तस्माद्विमुच्यते ॥ ६९ ॥
कोटिः पापानि सन्त्येव स्वल्पानि च बहूनि च ।
तानि भूयो न बाधन्ते हरेर्नामानुकीर्तनात् ॥ ७० ॥

विष्णुरहस्ये—

ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ।
ते प्रयान्ति भयं त्यक्त्वा हरिलोकमनामयम् ॥ ७१ ॥
गोकोटिदानं ग्रहणेषु काशीप्रयागगङ्गायुतकल्पवासः ।
यज्ञायुतं मेरुसुवर्णदानं गोविन्दकीर्तेर्न समं शतांशैः ॥ ७२ ॥

---

त्यादि* । *कृष्णाख्यमिति* । कृष्णेत्याकारकमित्यर्थः । संसार-भ्रमणनिवर्तको नामजप इत्याह-*क्वचिदित्यादि* । *कायेनेति* । रामनामसङ्कीर्तने कायस्य वाद्यवादनादिद्वारोपयोग इति बोध्यम् । *ये स्मरन्तीति* । नामोच्चारणमहात्म्यप्रस्तावेऽस्य वचनस्य संग्रहणं नामिनस्स्मरणस्य नामस्मरणपूर्वकत्वमित्यभिप्रेत्येति ज्ञेयम् । *गोविन्दकीर्तेरिति*। गोविन्देत्याकारकनामकीर्तनस्य । भावे क्तिन्, भक्तिर्भजनमितिवत् । *अयुतेति* । दशसहस्रम् । *कल्पवास इति* । मकरसंक्रान्तौ गङ्गातटे नियमपूर्वकं निवासः ।

सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता।
यन्मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ ७३ ॥
एतदेव परं ज्ञानं एतदेव परं तपः।
एतदेव परं तत्वं वासुदेवस्य कीर्तनम् ॥ ७४ ॥
यदभ्यर्च्य हरिं भक्त्या कृते वर्षशतं नरः।
फलं प्राप्नोत्यविकलं कलौ गोविन्दकीर्तनात् ॥ ७५ ॥
अनन्दितोऽथ दुःखार्त्तः क्रुद्धः शान्तोऽथवा हरिम्।
यस्तु कीर्तयते भक्त्या स गच्छेद्वैष्णवं पदम् ॥ ७६ ॥
हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये।
नारायणाख्यं पीयूषं पिब जिह्वे निरन्तरम् ॥ ७७ ॥
हे जिह्वे मयि निःस्नेहे हरिं किं त्वं न भाषसे।
हरीति वद कल्याणि संसारार्णवनौर्हरिः ॥ ७८ ॥
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ ७९ ॥

---

इन्द्रियाणां विद्यमानत्वेऽपि भगवन्नामोच्चारणाभावे तेषामभावतुल्यत्वमित्याह-*सा हानिरित्यादि*। श्रीभगवतो नामोच्चारणमेव परमतपोज्ञानसदृशमित्याह-*एतदेव परं ज्ञानमिति*। कृतादिष्वनेकवर्षशतकृतपूजनस्य फलं कलौ गोविन्दनामोच्चारणादेव लभ्यत इत्याह-*यदभ्यर्च्येति*। *रससारज्ञ इति*। रसेभ्य सारः, मुख्यांशः, तं जानातीति। *मधुरः*। मधुररसः सः प्रियो यस्याः सेति तथा। *पियूषमिति* ।अमृतमित्यर्थः। 'पियूषममृतं सुधा' इत्यमरः। *अनिच्छयापीति*। एतत्पदं मध्यमणिन्यायेन 'स्मृतः' इत्यत्र 'संस्पृष्टः'

ब्रह्मरहस्ये—

नियतं मम नामानि जपेद्वा कीर्तयेद्यदि ।

महतोऽप्येनसः सत्यमुद्धरामि न संशयः ॥ ८० ॥

कर्मध्वजं प्रति ब्रह्मवाक्यम् ।

सकृदुच्चारयेद्यस्तु जगन्नाथेति हेलया ।

ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः॥ ८१ ॥

सर्वाचारविहीनोऽपि तापक्लेशादिसंयुतः ।

जगन्नाथं वदन् विप्र याति ब्रह्म सनातनम् ॥ ८२ ॥

शिवरहस्ये—

स्मर्तव्यः शङ्करो नित्यं शं करोतीति शङ्करः ।

शं नाम नित्यमानन्दमनिर्वाच्यमनामयम् ॥ ८३ ॥

सततं नाम जिह्वाग्रे शङ्करेत्यस्ति यस्य सः ।

दुःस्वभावान्तो भवेन्नित्यं सत्यं सत्यं न संशयः ॥ ८४ ॥

शिवेति नाम विमलं शिवनामोत्तमोत्तमम् ।

तद्येन स्मर्यते नित्यं तस्य दासो भवाम्यहम् ॥ ८५ ॥

महादेव महादेव महादेवेत्ययं ध्वनिः ।

---

इत्यत्र चान्वेति । ततश्च दुष्टचित्तैः अनिच्छयापि–हरिः पापनाशकर्ते तीच्छाभावेऽपि हरिः स्मर्तुं शक्यते 'क तव हरिः' इति प्रह्लादं प्रति प्रश्नकर्तृहिरण्यकशिपुवत् । *नियतम्* । नियमकालम् । अथवा नियतमिति क्रियाविशेषणम् । *जपेद्वेति* । मनसा स्मरेत् । 'जप मानसे च' इतिधातुपाठात् । *कीर्तयेत्* । महता शब्देनोच्चारयेदित्यर्थः । *हेलयेति* । क्रीडयेत्यर्थः । शङ्करशब्दव्युत्पादनेन तन्नामो-

अपमृत्युहरो नूनं कालमृत्योश्च नाशकः ॥८६॥
महादेव महादेव महादेवेत्ययं ध्वनिः ।
संसारवीजदावाग्निः सत्यं सत्यं न संशयः ॥ ८७ ॥
महादेव महादेव महादेवेत्ययं ध्वनिः ।
संसारसर्पदष्टानां दिव्यौषधमनुत्तमम् ॥ ८८ ॥
वशीकरोति व्याघ्रादीनपि सत्यं मयोच्यते ।
महादेव महादेवेत्युच्चरन्नियतेन्द्रियः ॥ ८९ ॥
मृत्युं न गणयत्येव सत्यं सत्यं मयोच्यते ।
कोटयो ब्रह्महत्यानामगम्यागमकोटयः ॥ ९० ॥
सद्यः प्रलयमायान्ति महादेवेति कीर्तनात् ।
महादेवेति नामेदं यः शृणोति वदिष्यति ॥ ९१ ॥
न तस्य नरके वासः सत्यं सत्यं न संशयः ।
शङ्करेशमहेशेति नाम दिव्यं महावने ।
पुरा श्रुतं पिशाचेन ततस्तस्मात्स मोक्षितः ॥ ९२ ॥
शिवनामामृतत्पुण्यरसनाः शीवपूजकाः ।
शीवध्यानरता नित्यं सन्ति धन्याः क्वचित्क्वचित् ॥ ९३ ॥
परलोकस्य पाथेयं मोक्षोपायमनामयम् ।

---

च्चारणजं फलं कथयति—*शङ्करोतीति* । *कालमृत्योश्चेति* । महामृत्योरित्यर्थः । *संसारवीजम्* । अज्ञानम् । *दावाग्निरिति* । अरण्याग्निः । पश्वादीनामपि महादेवध्वनिर्वश्यकारक इत्याह— *वशीकरोतीति* । *अगम्यागमेति* । चाण्डाल्यादिगमनेत्यर्थः ।

पुण्यसङ्घौघनिलयं शीव इत्यक्षरद्वयम् ॥ ९४ ॥
यतो विभूतिकवचाः शिवनामास्त्रपाणयः ।
चत्वार एव यामीयैश्चक्रुर्युद्धं पुरा मुदा ॥ ९५ ॥
विभूतिवज्रकवचैर्भन्नामशरपाणिभिः ।
विजयः सर्वतो लभ्यो न तेषां दृश्यते भयम् ॥ ९६ ॥
ब्रह्महत्यासहस्राणि पुरा कृत्वापि पुल्कसः ।
शिवेति नाम विमलं श्रुत्वा मोक्षं गतः पुरा ॥ ९७ ॥
ये केऽपि प्रमथाः शुद्धाःशीवनामामृताशनाः ।
इन्द्राद्यर्चितपादाब्जा वसन्ति शीवसन्निधौ ॥ ९८ ॥
शिव शङ्कर विश्वेश महादेवेति यन्मया ।
पूर्वमुच्चारितं युद्धे जयस्तेनाभवन्मम ॥ ९९ ॥

यन्नामसङ्कीर्तनमेकमेव
विनाशयत्याशु महाघसङ्घम् ।
तं देवमीशं शरणं व्रजामि
ब्रह्मेन्द्रविश्वादिसुरैकवन्द्यम् ॥ १०० ॥

यन्नामपीयूषमपीयमानं
भवन्ति संसारसमुद्रमग्नाः ।

---

*यामीयैः* । यमदूतादिभिः । *प्रमथाः* । पारिषदाः । 'प्रमथास्युः पारिषदाः' इत्यमरः । *विश्वादीति* । विश्वशब्देन विश्वेदेवा-श्राह्याः । 'विश्वेऽश्विनौ मरुतश्चोष्मपाश्च' इति श्रीभगवद्गीतायां तथैव दृष्टत्वात् । एवञ्च विश्वप्रभृतिका देवा इत्यर्थः । *अपीयमानमि -

तं देवमीशं शरणं व्रजामि० ॥ १०१ ॥

यन्नाममन्त्रोच्चरणेन सद्यो
धन्या भवन्त्येव हि पापिनोऽपि ।
तं देवमीशं शरणं व्रजामि० ॥ १०२ ॥

यन्नामदेहक्षयपूर्वकाले
स्मृतं ददात्येव हि मोक्षमेकम् ।
तं देवमीशं शरणं व्रजामि० ॥ १०३ ॥

यन्नामतत्वं नहि वेद वेदो-
प्यनन्तशाखः सकलस्वरूपम् ।
तं देवमीशं शरणं व्रजामि० ॥ १०४ ॥

यन्नाम संसारमहासमुद्र-
विद्रावकं सर्वभयापहारि ।
तं देवमीशं शरणं व्रजामि० ॥ १०५ ॥

यन्नामसङ्कीर्तनपूतजिह्वा
ब्रह्मेन्द्ररुद्रावरजादिपूज्याः ।
तं देवमीशं शरणं व्रजामि० ॥ १०६ ॥

---

ति* यदा यन्नामपीयूषमपीयमानं भवति तदा संसारसमुद्रमग्नाः भवन्तीति रीत्या योजनीयम् । *धन्या इति* । श्रेष्ठा निष्पाप इत्यर्थः । 'सद्यः' इति पदेन ज्योतिष्टोमादिवत्कालान्तरेण फलदातृत्वं निरस्यते । *नामतत्वमिति* । *न हि वेदेति* । 'तत्व' पदेन यथा परमेश्वरतत्वं न वेदोऽपि जानाति 'यत्र वेदोऽवेदः' 'यतो वाचो निवर्तन्ते' 'नेति नेति' इत्यादिश्रुतेः, तथा नामतत्वं 'वेदो न वेद' इति कथनेन तद-

यन्नाम गोकोटिसहस्रकोटि-
प्रदानपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ १०७ ॥

यन्नाम यागार्बुदकोटिकोटि-
सहस्रपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ १०८ ॥

यन्नाम मत्तोन्नतदन्तिकोटि-
प्रदानपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ १०९ ॥

यन्नामरत्नोत्तमकोटिकोटि-
प्रदानपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ ११० ॥

यन्नाम कन्यार्बुदकोटिकोटि—
प्रदानपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ १११ ॥

यन्नामसस्यावृतसर्वपृथ्वी—
प्रदानपुण्याधिकपुण्यपुण्यम् ।
तं देवमीशं शरणं व्रजामि० ॥ ११२ ॥

सर्वाणि शिवनामानि मोक्षदान्येव सर्वदा ।

---

वतारूपमस्तीति सूचितम् । नामतत्वं कथं भगद्रूपमस्तीत्यादि सर्वं विवेचितं पूर्वम् (४४ पृ०) । *यागार्बुदकोटिकोटिसहस्रपुण्येति* ।

तेष्वप्यत्युत्तमं नाम शिवेति ब्रह्मसंज्ञितम् ॥ ११३ ॥
शिवनामसमं वस्तु न दृष्टं क्वापि न श्रुतम् ।
गलरत्नमिदं नूनं नामरत्नमनुत्तमम् ॥ ११४ ॥
नित्यं कण्ठे स्थितो येन शिवनाममहामणिः ।
स नीलकण्ठो भूत्वान्ते नीलकण्ठे विलीयते ॥ ११५ ॥
सादरं भस्मदिग्धाङ्गो वदेच्छिवशिवेति यः ।
स संसारविनिर्मुक्तो भवत्येव न संशयः ॥ ११६ ॥
अनेकजन्मभिर्नित्यं पुण्यं बहुकृतं यदि ।
तदा शिवेति शब्दोऽयं सादरं निःसरिष्यति ॥ ११७ ॥
शिवेति नाम विमलं येनोच्चरितमादरात् ।
तेन भूयो न संसारसागरः समवाप्यते ॥ ११८ ॥
परब्रह्मेति विज्ञेयं शिव इत्यक्षरद्वयम् ।

---

अनन्तपुण्यफलदमित्यर्थः । *न दृष्टमिति* । परमेश्वरस्यैकत्वात् तत्स्वरूपभूतस्य नाम्नोऽपि तदेकरूपत्वेन तत्सदृशस्यान्यत्र दर्शनाभाव उचित एव । शिवनामोच्चारणेन शिवसदृशरूपप्राप्तिस्तथा नीलकण्ठे लयो भवतीत्याह—*स नीलेति* । साधारणशिवशब्दोऽपि विना पुण्यं मुखान्न निःसरतीत्याह*—अनेकजन्मेति* । *विमलमिति* । मलः—संसारः, तत्सम्बन्धरहितम् । 'शुद्धं निष्कलं शान्तम्' इति श्रुतेः ।

*परब्रह्मेति विज्ञेयमिति* । *अक्षरद्वयमिति* । अनेन परमात्मवदक्षरद्वयस्वरूपमप्यद्वयं परब्रह्मतत्त्वमस्ति, एवं यथा परब्रह्मसाक्षात्कारे नित्यसुखादिप्राप्तिस्तथा नामरूपपरब्रह्मजपेऽपि नद्वेव

तद्ब्रह्मेति विदित्वैव तदुपास्यं मुमुक्षुभिः ॥ ११९ ॥
तद्धि ब्रह्मेत्युपासीत भवति ब्रह्मवांस्ततः ।
ब्रह्मवान्ब्रह्मविद्भूत्वा ब्रह्मभूतो हि जायते ॥ १२० ॥
अव्यक्तं परमं ब्रह्म शिव इत्यक्षरद्वयम् ।
तदेव सर्ववेदान्तप्रतिपाद्यं न संशयः ॥ १२१ ॥
शिव इत्यस्ति मन्नाम तद्धि नामोत्तमोत्तमम् ।
तदेव परमं ब्रह्म तदेवाहं वरानने ॥ १२२ ॥
शिवनामस्वरूपेण व्यक्तं ब्रह्माहमेव हि ।
शिवनामाहमेवेति विजानीहि यथार्थतः ॥ १२३ ॥
यदव्यक्तं परं ब्रह्म वेदान्तप्रतिपादितम् ।
तदेवेदं विजानीहि शिव इत्यक्षरद्वयम् ॥ १२४ ॥

---

फलमिति बोधितम् । *विदित्वैव* । शिवेत्यक्षरद्वयं ब्रह्मरूपमतस्त-द्ब्रह्मेवेति ज्ञात्वोपास्यमन्यथादर्शने दोषादिति भावः । *ब्रह्मवान् ब्रह्मविद्भूतेति* । यो ब्रह्मोपासकस्स उपासनासिद्धेर्ब्रह्मवान् भवति, अनन्तरमुपासनासिद्धिबलेन ब्रह्मविद्भवति ततो ब्रह्मज्ञानेन ब्रह्मभूतो भव-तीत्यर्थः । *सर्ववेदान्तप्रतिपाद्यमिति* 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः साक्षात्परम्परया वा सर्ववेदान्तप्रतिपाद्यं यथा नामिरूपं परब्रह्म, तथा तदभिन्नं नामरूपमपि तथेति भावः । *नामोत्तमोत्तममिति* । अ-त्रैव हेतुबोधकमिदं 'परब्रह्म' इति पदम् । यतः साक्षात्परब्रह्म, अतो ना-मोत्तमोत्तममिति । *व्यक्तमिति* । इन्द्रियगम्यम् । शिवेत्यक्षरस्वरूप-स्य वाचा गदितुं शक्यत्वाद् व्यक्तमित्युक्तम् । शिवेत्यक्षरस्वरूपेणान-भिव्यक्तं त्विन्द्रियागम्यम्, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह

इदं व्युत्पत्तिरहितं शवनाम निरञ्जनम् ।
निराकारं परं ब्रह्म नैतस्मात्ब्रह्म भिद्यते ॥ १२५ ॥
उपासितव्यमेतद्धि ब्रह्मेत्यन्वहमादरात् ।
शिव इत्यक्षराकारमक्षरं ब्रह्म शाश्वतम् ॥ १२६ ॥
तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम् ।
नैतस्मादपरं किं चित्तारकं ब्रह्म सर्वथा ॥ १२७ ॥
इदं मत्तारकं ब्रह्म शिवनामाभिधं शिवे ।
एतस्मिन्ब्रह्मणि श्रद्धा न विना मदनुग्रहम् ॥ १२८ ॥
मद्भक्तान् विमलान्दृष्ट्वा मरणासन्नजीवनान् ।
ममैवाङ्के संनिवेश्य शिवेत्युपदिशाम्यहम् ॥ १२९ ॥
यस्य कस्यापि वा जन्तोर्मरणे समुपस्थिते ।
काश्यां शिवशिवेत्येतन्नामैवोपदिशाम्यहम् ॥ १३० ॥
शिवेतिनाम विमलं यदादावुक्तमादरात् ।
तेनैवाखिलपापानि नष्टान्यत्र न संशयः ॥ १३१ ॥
तदनन्तरमुक्तं यच्छिवनामाभिधं शिवे ।

---

इति श्रुतेरिति भावः ।

*व्युत्पत्तिरहितमिति* । निर्वचनरहितम् । किञ्चिद्धर्मकस्य तद्धर्ममुद्दिश्य निर्वचनं सम्भवति । सर्वधर्मकस्य कमपि गुणमुद्दिश्य निर्वचनेऽन्यगुणाभावशङ्कापत्त्या निर्वचनमेवायोग्यमिति भावः । अथवा वस्तुतोऽप्रमेयत्वान्निर्वचनाभाव इत्यर्थः । अत्र बहुकृत्वोऽभ्यासेन नामनामिनोर्वस्तुनोऽत्यन्तमभेद इति बोधितम् । *निरञ्जनमिति* । अञ्जनमुपाधिस्तद्रहितमित्यर्थः । *विना मदनुग्रहमि-

मुक्तिदन्तद्भवत्येव मा कुर्वन्त्वत्र संशयम् ॥ १३२ ॥
नित्यं शिवेति मन्त्रेण पूजयस्व सदाशिवम् ।
नैतस्मादुत्तमो मन्त्रः श्रेष्ठो वेदेष्वपि ध्रुवम् ॥ १३३ ॥
शिवेति यः परो मन्त्रः स परं ब्रह्म उच्यते ।
परब्रह्मस्वरूपं तज्ज्ञातुमेव न शक्यते ॥ १३४ ॥
तत्वं तु शिवमन्त्रस्य येन ज्ञातं भविष्यति ।
तेन तीर्ण इति ज्ञेयो घोरः संसारसागरः ॥ १३५ ॥
ततस्तेनैव मन्त्रेण पूजनीयः सदा शिवः ।
हरो हरति पापानि संसारात्तारयेन्नरम् ॥ १३६ ॥
करोति निर्मलाकारं हरनाम परं वरम् ।
शिवनामैव संसारमहारोगैकशामकम् ॥ १३७ ॥
नान्यत्संसाररोगस्य नाशकं दृश्यते मया ।
समस्तवेदवेदान्तसारभूतं शिवप्रदम् ।
शिवनामामृतं दिव्यं ध्येयं सर्वार्थसाधकम् ॥ १३८ ॥

---

ति* । अनेकशङ्कापङ्काकुलत्वाच्चेतसश्शिवानुग्रहं विना नामरूपं परब्रह्मेति निश्चयासम्भवात् । अनुग्रहकारणं तु तद्भक्तत्वं काशीस्थितत्वं चेत्यग्रिमवाक्याद्बोध्यम् । *नैतस्मादिति* अस्य ब्रह्मस्वरूपत्वेनेति शेषः । *वेदेष्वपीति* । वेदानां ब्रह्मप्रतिपादकत्वेन ब्रह्मरूपत्वाभादिति भावः *निर्मलाकारमिति* । मायासम्बन्धरहितमित्यर्थः । *संसारमहारोगेति* संसार एव रोगवद्दुःखदायकत्वेन महारोगस्तस्य शामकं-निवर्तकमित्यर्थः । *शिवप्रदमिति* । कदया

विष्णुधर्मोत्तरे—

चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत्।
नाशौचं कीर्तने तस्य स पवित्रकरो यतः॥ १३९॥
अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत्।
सङ्कीर्तितमघं पुंसो दहेदेधो यथाऽनलः॥ १४०॥
गोविन्देति समुच्चार्य पदं क्षपितकल्मषः।
क्षत्रबन्धुर्विनष्टात्मा गोविन्दत्वमुपेयिवान्॥ १४१॥
अथ पातकभीतस्त्वं सर्वभावेन भारत।
विमुक्तान्यसमारम्भो नारायणपरो भव॥ १४२॥

यथा तरोर्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणि
तथैव सर्वार्हणमच्युतेज्या॥ १४३॥

प्रह्लादवाक्यम्—

न गङ्गा न गया सेतुर्न काशी न च पुष्करम्।

---

णदमित्यर्थः। *चक्रायुधस्येति*। चक्रमेव प्रधानमायुधं यस्येति व्युत्पत्त्या विष्णोरित्यर्थः। *विमुक्तान्यसमारम्भ इति*। नामोच्चारणातिरिक्तत्यक्तसर्वकार्य इत्यर्थः। सर्वेषां मूलभूतस्य नारायणस्यार्चनादिना सर्वमपि सन्तुष्टं भवतीति दृष्टान्तप्रदर्शनपूर्वकमाह *यथा तरोरिति*। *प्राणोपहारादिति*। प्राणसन्तर्पणादित्यर्थः। *न गङ्गेत्यादि*। यस्य वाचि हरिनामास्ति तस्य गङ्गादि तीर्थं नोप-

जिह्वाग्रे वसते यस्य हरिरित्यक्षरद्वयम् ॥ १४४ ॥
वाराणस्यां कुरुक्षेत्रे नैमिषे पुष्करे तथा ।
न वर्तते न येनोक्तं हरिरित्यक्षरद्वयम् ॥ १४५ ॥
अश्वमेधादिभिर्यज्ञैर्नरमेधैः सदक्षिणैः ।
याजितं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ १४६ ॥
गवां कोटिसहस्राणि कन्यादानायुतानि च ।
दत्तानि तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ १४७ ॥
प्राणप्रयाणपाथेयं संसारव्याधिभेषजम् ।
दुःखक्लेशपरित्राणं हरिरित्यक्षरद्वयम् ॥ १४८ ॥
असारतरसंसारसागरोत्तारकारकम् ।
व्यसनोत्तारकश्चैव हरिरित्यक्षरद्वयम् ॥ १४९ ॥
जितं तेन जितं तेन जितं तेनेति निश्चितम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम ॥ १५० ॥

विरिञ्चिसर्वस्वे—

नाम्नां हरेः कीर्तनतः प्रयाति संसारपारं दुरितौघमुक्तः ।
नरः स सत्यं कलिदोषजन्यं पापं निहन्त्याशु किमत्र चित्रम् ॥१५१॥

देवकीतनयपूजनपूतः
पूतनारिचरणोदकधौतः ।

---

योगीत्यर्थः । यस्य तु वाचि नास्ति तेन काश्यादितीर्थेषु गन्तव्य-मित्यभिप्रायमग्रिमश्लोकेन वर्णयति--*वाराणस्यामिति* ।

*देवकीतनयेति* । श्रीकृष्णपूजनपवित्रः । *पूतनारीति* । पूत-

यद्यहं स्मृतधनञ्जयसूतः
किं करिष्यति स मे यमदूतः ॥ १५२ ॥

शिवसर्वस्वे—

यावन्न कीर्तयेद्रामं कलिकल्मषसंभवम् ।
तावत्तिष्ठति देहेऽस्मिन् भयं चात्र प्रवर्त्तते ॥ १५३ ॥

श्रीरामायणे—

न तत्र दानवाः सन्ति न पिशाचा न राक्षसाः ।
यक्षकिन्नरवेतालप्रेतभूतविनायकाः ।
यत्र देवो गृहे विष्णुः कीर्त्यते हि सदा सताम् ॥ १५४ ॥
सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वदा दास्य इति जन्मव्रतं मम ॥ १५५ ॥

---

नानामकराक्षस्या अरिः-श्रीकृष्णः, तच्चरणोदकशुद्धः । *स्मृतधनञ्जयेति* । चिन्तितार्जुनसारथिः । *कलिकल्मषेति* । एतद्भयस्य विशेषणम् । *दानवा इति* । दनुपुत्रा इन्द्रशत्रवः । *पिशाचा इति* । पिशितमश्नन्तीति तथा, अशभोजनेऽस्मात्कर्मण्यणि पृषोदरादित्वात्साधुः । *राक्षसा इति* । रक्षन्त्येभ्य इति रक्षांसि । रक्षपालनेऽस्मात् 'सर्वधातुभ्योऽसुन्' इत्यसुनि प्रज्ञादित्वात्स्वार्थेऽणि साधुः । *किन्नरा इति* । कुत्सिता नराः, अश्वमुखत्वात् । *वेतालः* । वी-वायुरितो-गतो यस्मात्स वेतः । वेतमलतीति वेतालः, भूताधिष्ठःशवः । *प्रेत* । भूतविशेषः । 'प्रेतो भूतान्तरे पुंसि' इति मेदिनी । *भूतेति* । दुःखदायकजातिविशेषः । *विनायकेति* । कर्मविघ्नोत्पादकः । 'विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः' इति याज्ञवल्क्यः । *प्रपन्नाय* । भक्ताय । *अस्मीति* । दास इति शेषः । *जन्मव्रतमिति* ।

वासिष्ठरामायणे—

त्वदनुस्मृतिकल्याणवार्तामिह महेश्वर ।
स्मृत्वा किञ्चिन्न दुष्प्रापं न मे काश्चन भीतयः ॥ १५६ ॥
त्वदनुस्मरणानन्दपरिप्लावितचेतसाम् ।
न ते सन्ति जगत्कोणे प्रणमन्ति न ये पुनः ॥ १५७ ॥
ते देशास्ते जनपदास्ता दिशस्ते च पर्वताः ।
त्वदनुस्मरणोपात्तधियो यत्र स्थिता जनाः ॥ १५८ ॥
फलं भूतस्य पुण्यस्य वर्तमानस्य सेचनम् ।
तनोति चैष्यतो बीजं त्वदनुस्मरणं विभो ॥ १५९ ॥
ज्ञानामृतैककलशो धृतज्योत्स्नानिशाकरः ।
अपवर्गपुरद्वारं त्वदनुस्मरणं विभो ॥ १६० ॥
त्वदनुस्मरणोदारचिन्तामणिवता मया ।
सर्वासामापदां मूर्ध्नि दत्तं भूतपते पदम् ॥ १६१ ॥

इति, इतिहासाः । अथ महापुराणानि । तत्र तावद्ब्रह्मपुराणे—

---

जन्मनः प्रभृति व्रतं-अवश्याचरणीयम् । *वर्तमानस्येति* । अत्रापि पुण्यस्येति पदस्यानुषङ्गः । *सेचनमिति* । वर्धकम् । *एष्यतः* । आगमिष्यतः । *ज्ञानामृतेकेति* । ज्ञानरूपामृतस्य मुख्यः कलशवद्धारकः । *धृतज्योत्स्नेति* । ज्योत्स्नायुक्तो निशाकरश्चन्द्रः, तस्य सर्वदा चन्द्रिकायुक्तत्वेऽपि ज्योत्स्नापदसान्निध्येनातिशयज्योत्स्नायुक्तत्व बोधितम् ।

*इतिहासा इति* । 'प्राग्वृत्तकथनं चैकराजकृत्यमिपादितः । यस्मिन्त्स इतिहासः स्यात्पुरावृत्तः स एव हि'॥ इति शुक्रनीत्युक्तलक्षण-

अप्यन्यचित्तः शुद्धो वा यः सदा कीर्तयेद्धरिम् ।
सोऽपि दोषक्षयान्मुक्तिं लभेच्चेदिपतिर्यथा ॥ १६२ ॥

तत्रैव पितृस्तुतिप्रस्तावे—

जयस्व गोविन्द जगन्निवास
जयो स्तु नः केशव ते प्रसादात् ।
जनार्दनास्मान्सलिलान्तरस्थान्
उद्धर्त्तुमर्हस्यनघप्रताप ॥ १६३ ॥

निशाचरैर्दारुणदर्शनैः प्रभो
शरण्य वैकुण्ठ वराह विष्णो ।
नारायण कृष्ण महेश्वरेश
मां पाहि दैत्यानुज पद्मनाभ ॥ १६४ ॥

त्वन्नामसंकीर्तनतो निशाचरा-
द्रवन्ति भूतान्यपयन्ति चारयः ।
नाशं तथा संप्रति यान्ति विष्णो
धर्मादि सत्यं भवतीह मुख्यम् ॥ १६५ ॥

---

लक्षिताः। *महापुराणानीति*। 'सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् । कर्मणां वासना वार्ता मनूनां च क्रमेण च ॥ वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् । उत्कीर्तनं हरेरेव देवतानां च पृथक् पृथक् । दशाधिकं लक्षणं च महतां परिकीर्तितम्' ॥ इति ब्रह्मवैवर्तीयलक्षणलक्षितानीत्यर्थः ।

*चेदिपतिः*।शिशुपालः। *तत्रैवेति*।ब्रह्मपुराण इत्यर्थः।*द्रवन्तीति*।

शाठ्येनापि नरा नित्यं ये स्मरन्ति जनार्दनम् ।
तेऽपि यान्ति तनुं त्यक्त्वा विष्णुलोकमनामयम् ॥ १६६ ॥

पाद्मे—

संसारसर्पसंदष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥ १६७ ॥
स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातु चित् ।
सर्वे विधिनिषेधास्स्युरेतयोरेव किङ्कराः ॥ १६८ ॥
यस्तु संकीर्तयेन्नित्यं नारायणमनामयम् ।
स पूतो नात्र संदेहो महापातकसंकटात् ॥ १६९ ॥
यत्र तत्र स्थितो वापि कृष्ण कृष्णेति कीर्तयेत् ।
सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् ॥ १७० ॥

तत्रैव देवपतिस्तुतौ—

प्रयाणे चाप्रयाणे च यन्नाम स्मरतां नृणाम् ।
सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने ॥ १७१
मोहानलोल्लसज्ज्वालाज्वलल्लोकेषु सर्वदा ।

---

पलायन्त इत्यर्थः । *अनामयमिति* । नाशरहितम् । *विधिनिषेधाः* । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' इत्यादयः प्रवृत्तिनिवृत्तिकरा इत्यर्थः । *किङ्करा इति* । दासवदधीना इत्यर्थः । *प्रयाण इति* । प्रकृष्टं यानं प्रयाणं तस्मिन्, मरणसमय इत्यर्थः । *चिदात्मन इति* । चित्स्वरूपाय । *मोहानलेति* । मोह एवानलः-अग्निस्तस्योल्लसन्त्यः-चका-

यन्नामाम्भोधरच्छायां प्रविष्टो नानुदह्यते ॥ १७२ ॥

सकृदुच्चारयेद्यस्तु नारायणमतन्द्रितः ।

शुद्धान्तःकरणो भूत्वा निर्वाणमधिगच्छति ॥ १७३ ॥

कीर्त्तयञ्छ्रद्धया युक्तो हरेर्नाम सदा नरः ।

स पूतो जायते नित्यं सुवर्णस्तेयपातकात् ॥ १७४ ॥

ये स्मरन्ति सकृद्भक्त्या प्रसङ्गेनापि केशव ।

तेऽपि धौताखिलाघौघा यान्ति विष्णोः परं पदम् ॥१७५॥

वहुधा कीर्तितं नाम येन दुष्कृतकर्मणा ।

हरेर्नाम महापापसमूहात्तेन मुच्यते ॥ १७६ ॥

तत्रैव पार्वतीं प्रति ईश्वरवाक्यम्—

अनन्यगतयो मर्त्या भोगिनोऽपि परन्तप ।

ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥ १७७ ॥

सर्वधर्मोज्झिता विष्णो नाममात्रैकजल्पकाः ।

सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः॥ १७८ ॥

तत्रैव—

मृत्युं समालोक्य शिवो वभाषे

मन्नाम येषां मरणे मुखेऽस्ति ।

---

सन्त्यो ज्वालाः-शिखास्ताभिर्ज्वलन्सु-दह्यमानेषु लोकेषु-जनेषु भुव-नेषु वेत्यर्थः। *निर्वाणमिति*। मोक्षमित्यर्थः। *न तां सर्वेऽपीति*। अनेन सर्वधर्मापेक्षया नाम्नोऽतिश्रेष्ठत्वं द्योतिम।

मच्चेतसामन्यधियां च नाम
हीनाक्षरं वाधिकवर्णयुक्तम् ॥ १७९ ॥
ममैव लोकं प्रददामि सत्यं
ह्यनेन नाम प्रहरेति चोक्तम् ।
प्रशब्दमात्रं त्वधिकं हरेति
गतिप्रदं ये पदमीरयन्ति ॥ १८० ॥
आरादमून्वर्जयतान्नमस्व
मदीयवाक्यं च यमं वदस्व ।
नतिं स्मृतिं कीर्त्तिमुपास्तिमाश्रयं
दास्यं च कैङ्कर्यमथ स्तुतिं श्रुतिम् ॥ १८१ ॥
शिवस्य कुर्वन्ति न ते विचार्याः
पञ्चाक्षरोक्तिं शतरुद्रियोक्तिम् ।
मन्नामरुद्राक्षविभूतिधारिणो
ममाग्रतो यस्तु पुराणवक्ता ॥

---

*हीनाक्षरमित्यादि* । अनेनार्थज्ञानस्यापेक्षा नास्तीति, तथा यत्र क्वाप्यागतहरेतिवर्णसमुदायोच्चरणनिमित्तकध्वनेरेव तादृशं सामर्थ्यमित्यपि सूचितम् । एतेन हरेत्यादिसुबन्तपदस्य तादृशज्ञानार्थकस्योच्चारण एव तादृशं सामर्थ्यं न तु प्रातिपदिकमात्रोच्चारणेऽन्यार्थकशब्दोच्चारणे वेति परास्तम् । *पञ्चाक्षरीमिति* । नमः शिवायेति पञ्चाक्षरसमुदायमित्यर्थः । *शतरुद्रियोक्तिमिति* । शतरुद्रीयसंज्ञितनामसमुदायमित्यर्थः । उक्तञ्च जाबालोपनिषदि 'अथ

सर्वेषु पापेष्वपि तेषु सत्सु
प्रशाम्यहं नैव यमाधिकारः ॥ १८२ ॥

तत्रैव शिवगीतायाम्—

आश्चर्ये वा भये शोके क्षुते वा मम नाम च।
व्याजेन वा स्मरेद्यस्तु स याति परमां गतिम् ॥१८३॥
महापापैरपि स्पृष्टो देहान्ते यस्तु मां स्मरेत्।
पञ्चाक्षरीं वोच्चरति स मुक्तो नात्र संशयः ॥१८४॥
अन्यानि शिवकर्माणि करोतु न करोतु वा॥
शिवनाम जपेद्यस्तु सर्वदा मुक्तचेतसः ॥ १८५ ॥

वैष्णवे—

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ १८६ ॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ १८७ ॥
यन्नाम कीर्तितं भक्त्या विलापनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ १८८ ॥

---

हैनं ब्रह्मचारिण ऊचुः। किं जप्येनामृतं ब्रूहीति। सहोवाच याज्ञवल्क्यः। शतरुद्रीयेणेत्येतानि ह वा अमृतस्य नामधेयान्येतर्हि वा अमृतो भवति' इति। शिवपूजादिकर्मणोऽपेक्षया शिवनामजप एव श्रेष्ठ इत्याह—*अन्यानीति*। *वैष्णवे*। विष्णुपुराण इत्यर्थः। *विलापनमिति*। नाशकमित्यर्थः।

कमलनयन वासुदेव विष्णो
धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै
त्यज भट दूरतरेण तानपापान् ॥ १८९ ॥

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥१९०॥

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥ १९१ ॥

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ १९२ ॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥ १९३ ॥

दन्ता गजानां कुलिशाग्रनिष्ठुराः
शीर्णा यदेते न बलं ममैतत् ।
महाविपत्पापविनाशनाय
जनार्दनानुस्मरणप्रभावः ॥ १९४ ॥

---

*अमलधियामिति* । शुद्धधियामित्यर्थः । *अन्तराय इति* । विघ्नमित्यर्थः ।

*परमिति* प्रधानमित्यर्थः । *अनुतापः* । पश्चात्तापः । *अप-

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ।
यस्मिन्स्मृते जन्मजरोद्भवानि
भयानि सर्वाण्यपयान्ति तात ॥ १९५ ॥

आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ १९६ ॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यस्यानुसंस्मृतेः ॥ १९७ ॥
प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयान्नरः ॥ १९८ ॥
विष्णुसंस्मरणादेव समस्तक्लेशसंक्षयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥ १९९ ॥
तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलपातकः ॥ २०० ॥
ध्यायन्नारायणं देवं स्नानादिषु च कर्मसु ।
प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति निश्चितम् ॥ २०१ ॥

शैवे सुधर्मनामानं राक्षसं प्रति रुद्रवाक्यम्—

कृष्णनाम सदा गेयं ध्येयं रूपं हरेरपि ।

---

हारिणि* । नाशके । *आयासः* । क्लेशः । *शोभनम्* । फलमिति शेषः *कलिकल्मषमिति* । कलिकालिकदुःखमित्यर्थः । नरकार्तिप्रदमिति* । नरकपीडासदृशपीडादायकमित्यर्थः । *न यातीति* । अत्र हेतुगर्भविशेषणं *संक्षीणमिति* ।

कीर्तनीयं सदा नाम मुरारेः परमा गतिः ॥ २०२ ॥

तत्रैव शिवनाममाहात्म्यम्—

महादेव महादेव महादेवेति यो वदेत् ।
एकेनैव भवेन्मुक्तिर्द्वाभ्यां शम्भू ऋणीभवेत् ॥ २०३ ॥
उक्तं शिवेति यैः पुण्यं तथा हरेति हरेति च ।
न ते द्रक्ष्यन्ति नरकं न यमं द्विजसत्तम ॥ २०४ ॥
अच्छिद्रं देशकालार्हवस्तुतः स्थानतोऽपि वा ।
सर्वं करोति निश्छिद्रं नाम संकीर्तनं तव ॥ २०५ ॥
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥ २०६ ॥
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशाद्विमुच्यते ॥ २०७ ॥
एतावतालमघनिर्हरणाय पुंसां
संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान्यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥२०८॥

---

*नामेति परमागतिरिति* । अत्र नामपदोत्तरपञ्चम्यभावेऽपि 'आयुर्वै घृतम्' इतिवद्धेतुहेतुमद्भावः । एकवारं शिवनामोच्चारणेनैव मुक्तिर्भवतीत्याह-*महादेवेत्यादि*। न्यूनाधिकमपि जातं कर्म नामस्मरणात्सम्पूर्णं भवतीत्याह-*अच्छिद्रमित्यादि*। *अघोन इति*। अघवतः *जगादेति*। अनेनाक्षरसमाहारस्य विवक्षितत्वेन श्रद्धापेक्षा नास्तीति सूच्यते। *अघनिर्हरणायेति*। पापनाशायेत्यर्थः। *इयायेति* । भगव

स्तेनस्सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनो परे ॥ २०९ ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ २१० ॥
साङ्केत्यं परिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ २११ ॥

यद्द्व्यक्षरं नाम गिरेरितं नृणां
सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिमलङ्घ्यशासनं
भवानहो द्वेष्टि शिवं शिवेतरः ॥२१२॥

म्रियमाणो हरेर्नाम गृह्णन्पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन् ॥२१३॥
एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।

---

नामकौमुद्यां 'उपैति' इतिपाठो दृश्यते। *मित्रध्रुगिति* । 'कृतघ्ने नास्ति निष्कृतिः' इति स्मृत्या कृतघ्नस्य पापाभावबोधनेऽपि नामस्मरणरूपं प्रायश्चित्तमस्तीति बोध्यते । *साङ्केत्यमिति* । पुत्रादिषु सङ्केतितम् । *पारिहास्यम्* । परिहासेनोक्तम् । *स्तोभम्* । सामवेदीयपादपूरणार्थं गीयमाननिरर्थक 'हावु' इत्यादिपदसदृशम् , निरर्थकमित्यर्थः। *हेलनमिति* । तिरस्कारेणोच्चारितम् ।

सती स्वपितरं दक्षं प्रति शिवनामोच्चारणे पापं नष्टं भवतीत्याह-*सकृत्प्रसङ्गादिति* । प्रसङ्गात्—उच्चारणात् । *शिवेतरः* ।

योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ २१४ ॥
अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ २१५ ॥
आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ २१६ ॥
न निष्कृतैरुदितैर्ब्रह्मविद्भि—
स्तथा विशुद्ध्यत्यघवान्व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै—
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥ २१७ ॥
पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ।
हरिरित्यवशो जल्पन् पुमान्नार्हति यातनाम् ॥ २१८ ॥
नातः परं कर्म निबन्धकृन्तनं
मुमुक्षुणां तीर्थपदानुकीर्तनात् ।
न यत्पुनः कर्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ २१९ ॥
ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहापि च ।
श्वादः पुल्कसको वापि शुद्ध्येरन्यस्य कीर्तनात् ॥२२०॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।

---

कल्याणरहितः । 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । *यद्बिभेति* । यत्—यस्मात् । *संदष्टः* । अत्र सर्पादिभिरिति शेषः । *कलिलम्* । मिश्रितमित्यर्थः । *सभाजयन्तीति* । पूजयन्ति । *सारभागिनः* । मुख्यांशस्वीकुर्वाणाः । कृतादिषु

कीर्तनेनैव कृष्णस्य सर्वः स्वार्थोऽपि लभ्यते ॥२२१॥

कलेर्दोषनिधेराजन्नस्ति ह्येको महान् गुणः ।

कीर्तनादेव कृष्णस्य मुक्तवन्धः परं व्रजेत् ॥२२२॥

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।

द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ २२३ ॥

तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः ।

श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम् ॥ २२४ ॥

अन्तर्गतो यदि हरिस्तपसा ततः किं

नान्तर्गतो यदि हरिस्तपसा ततः किम् ।

अन्तर्वहिर्यदि हरिस्तपसा ततः किं

नान्तर्वहिर्यदि हरिस्तपसा ततः किम् ॥२२५ ॥

लघुभागवते—

गोवधः स्त्रीवधः स्तेयं पापं ब्रह्मवधादिकम् ।

गोविन्दकीर्तनादेव शतधा याति नारद ॥ २२६ ॥

ये पापिनोऽपि शिशुपालसुयोधनाद्याः

वैरानुबद्धमनसः परुषं वदन्ति ।

---

ध्यानादिभिर्यत्फलं भवति तत्कलौ हरिकीर्तनात्सम्पद्यत इत्याह—कृते यदित्यादि । भारतेति । भरतकुलज । भगवान् हरिर्मुखान्तर्गतो यदि भवेत्तदा तपसो नास्त्युपयोग इति भङ्ग्यन्तरेणाह—अन्तर्गत इति ।

लघुभागवत इति । महापुराणवचनप्रस्तावप्रसङ्गे लघुभागवतपुराणवचनप्रदर्शनं भागवतस्वरूपेणैक्यं मत्वेति बोध्यम् । शत

मुक्तिं गताः सपदि ते च विधूतपापाः
कः संशयः परमभागवतोत्तमानाम् ॥२२७॥
किं तात वेदागमशास्त्रविस्तरै—
स्तीर्थैरनेकैरपि किं प्रयोजनम् ।
यद्यात्मनो वाञ्छसि मुक्तिकारणं
गोविन्द गोविन्द इति स्फुटं रट ॥ २२८ ॥
वर्तमानं च यत्पापं भूतं यच्च भविष्यति ।
तत्सर्वं निर्दहत्याशु गोविन्दानलकीर्तनम् ॥२२९॥
ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम् ।
स्मरन्ति ये स्मारयन्ति हरेर्नाम कलौ युगे ॥ २३० ॥
अभक्ष्यभक्षणात्पापमगम्यागमनाच्च यत् ।
तत्सर्वं निर्दहत्याशु गोविन्दानलकीर्तनम् ॥ २३१ ॥
सदा द्रोहपरो यस्तु सज्जनानां महीतले ।
जायते पावनो नित्यं हरेर्नामानुकीर्तनात् ॥ २३२ ॥

---

धेति*। अत्र भित्वेति शेषः। *मुक्तिकारणम्*। ज्ञानम्। *गोविन्दानलकीर्तनमिति*। गोविन्द एव अनलस्तस्य कीर्तनादित्यर्थः। सज्जनानां भक्तानां द्रोहकर्तापि हरिनामकीर्तनात्पावनो भवतीत्याह—*सदेत्यदि*। एतेन जयविजययोः सनकादिमुनिद्रोहकरणात्कथमधःपातः, तौ विष्णुसन्निधौ सर्वदा निवसत इति शङ्का परास्ता। तयोर्विष्णुसन्निधौ निवासेऽपि पापनाशकं न विष्णुसान्निध्यं किन्तु नामजप एव। यदा हिरण्याक्षादिस्वरूपेणावतीर्य द्वेषेणाऽपि

हरिनाम हरिस्तत्र हरेर्नामातिरिच्यते।
नामाविमृश्य फलदं विमृश्य फलदो हरिः ॥ २३३ ॥
गोविन्देति मुदा युक्तः कीर्तयेद्यस्त्वनन्यधीः।
पावनेन च धन्येन तेनेयं पृथिवी धृता ॥ २३४ ॥

नारदीये—

अहो हि वाक्ये चतुरक्षरे द्वे
पुण्यस्य पापस्य निदानभूते।
उच्चारणादेव नृणां मुनीन्द्रा
नारायणश्चेति तथार्थवादः ॥२३५॥

पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः।
तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि ॥ २३६ ॥

---

नाम्नोच्चैरतुस्तदेव मुमुक्षतु इति। हर्यपेक्षया हरिनाम महदिति बोध्यते *हरिनामेति*। हरिस्तु विचार्यैवायं भक्तो विभीषणः पालनीयः, अयं रावणोऽरिर्मारणीय इत्यादिरीत्या फलं ददाति, परन्तु नाम केवल भक्ताभक्तसाधारणफलकमिति तदेव श्रेष्ठम्।

*चतुरक्षरे द्वे इति*। नारायण इति अर्थवाद इति चतुर्वर्णयुक्ते इत्यर्थः। *निदानभूते इति*। कारणभूते। *तद्वदेवेति*। अर्थवादवत्केवलं स्तुतिनिन्दाफलकानि, न तु तत्तत्फलजनकानीत्यर्थः। ननु पापान्यपि पौराणिकानि निषिद्धकर्मजन्यानि तथैव तथाकथने भवेयुरितिचेत्सत्यम्। नैतद्वचनं तादृशार्थविधायकं किन्तु यथार्थबोधकान्येव पुराणवचनान्यतः तेष्वर्थवादत्वं नैव मन्तव्यमित्यर्थस्य बोधकमित्यङ्गीकरणेऽदोषः। नाममाहात्म्यप्रस्ताव एतद्वचनसंग्रहणप्रयोजनन्तु सर्वाण्यपि पुराणवचनानि यथार्थबोधकानि तन्मध्यस्थि-

मार्कण्डेयपुराणे सलक्ष्मीकदत्तात्रेयं प्रति कार्तवीर्यः—

अनघस्त्वं जगन्नाथ न लेपस्तव विद्यते ।

अनघेयं मुनिश्रेष्ठ जगन्माता न दुष्यति ॥२३७॥

इति स्तुतः कीर्तवीर्यार्जुनेन दत्तात्रेय उवाच—

वरं वृणीष्व गुह्यं मे त्वया नाम यदीरितम् ।

तेन तुष्टिः परा जाता त्वय्यद्य मम पार्थिव ॥२३८॥

स त्वं वरय भद्रं ते वरं यन्मनसेप्सितम् ।

प्रसादसुमुखस्तेऽहं गुह्यनामप्रकीर्तनात् ॥ २३९ ॥

आग्नेयपुराणे प्रह्लादं प्रति श्रीकृष्णवाक्यम्—

न भयं यमदूतानां न भयं रौरवादिकात् ।

न भयं प्रेतराजस्य गोविन्देति च जल्पताम् ॥ २४० ॥

न भयं यमदण्डस्य यमपातसमुद्भवम् ।

न भयं यमदूतानां कृष्ण कृष्णेति जल्पताम् ॥ २४१ ॥

तत्रैव पापनाशनस्तोत्रे पुष्करवाक्यम्—

यच्चापराह्णे पूर्वाह्णे मध्याह्ने च तथानिशम् ।

कायेन मनसा वाचा कृतं पापमजानता ॥ २४२ ॥

---

तानि नाममाहात्म्यबोधकान्यपि तथेति बोधनार्थमिति ज्ञेयम् । *अनघ इति* । अघं—पापं तद्रहितः । *न लेप इति* । पापलेप इत्यर्थः ।

ईश्वरस्य सर्वनामापेक्षया गुह्यनामोच्चारणे तत्प्रीतिर्भवतीत्यवश्यं भवतीति बोधनार्थमितिहासीयं वचनमाह *वरं वृणीष्वेति* । *प्रेतराजस्येति* । परेतराजस्य, यमस्येति यावत् । 'कृतान्तो यमुनाभ्राता समवर्ती परेतराट्' इत्यमरः । *कायेनेत्यादि* कायेनागम्यागमना-

जानता च हृषीकेश पुण्डरीकाक्ष माधव ।
नामत्रयोच्चारणतः स्वप्ने यातु मम क्षयम् ॥ २४३ ॥
शारीरं मे हृषीकेश पुण्डरीकाक्ष माधव ।
नामत्रयोच्चारणतः स्वप्ने यातु मम क्षयम् ॥ २४४ ॥
शारीरं मे हृषीकेश पुण्डरीकाक्ष मानसम् ।
पापं प्रशमयाद्य त्वं वाक्कृतं मम माधव ॥ २४५ ॥
यद्‌ भुञ्जन्यत्स्वपंस्तिष्ठन् गच्छञ्जाग्रदवस्थितः ।
कृतवान्पापमद्याहं कायेन मनसा गिरा ॥ २४६ ॥
यत्स्वल्पमपि वा स्थूलं कुयोनिनरकावहम् ।
तद्यातु प्रशमं पापं वासुदेवानुकीर्तनात् ॥ २४७ ॥
परं ब्रह्म परं धाम पवित्रं परमं च यत् ।
तस्मिन्प्रकीर्तिते विष्णौ यत्पापं तत्प्रणश्यतु ॥ २४८ ॥

तत्रैव विष्णुपञ्जरे पुष्करवाक्यम्—

यथा परं ब्रह्म हरिस्तथा परं
जगत्स्वरूपं च स एव केशवः ।

---

दिकम् । मनसा परद्रोहादिकरणम् । वाचाऽनिष्टोच्चारणादिकम् । *स्वप्ने यात्विति* । अवश्यभोगप्रदं प्रारब्धरूपं यत्तत्स्वप्ने भोगं दत्वा क्षयं यात्वित्यर्थः । यच्च सञ्चितं तत्तु नामोच्चारणान्नष्टमेव भवतीत्यभिप्रायः । *वाक्कृतमिति* । वाचा कृतं पापमित्यर्थः । *यद्‌ भुञ्जन्निति* । एतत्पदं पापं कृतवानित्यनेनान्वेति, तथा तिष्ठन्नित्याद्यपि । *स्थूलमिति* । महदित्यर्थः । *नरकावहमिति* । नरकदायकमित्यर्थः । *परममिति* । परा—उत्कृष्टा, मा—लक्ष्मीर्यस्य

सत्येन तेनाच्युतनामकीर्तनात्
प्रणाशमेतु त्रिविधं ममाशुभम् ॥ २४९ ॥

भविष्ये—

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ।
यत्र यत्रानुकुर्वन्ति विष्णोर्नामानुकीर्तनम् ॥
सर्वपापविनिर्मुक्तास्तेऽपि यान्ति सनातनम् ॥ २५० ॥

तत्रैव—

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यस्मरेद्देवमीशानं न स पापेन लिप्यते ॥ २५१ ॥

ब्रह्मवैवर्त्ते—

द्विजस्य हननं कुर्यात् कामतो वा सुरां पिबन् ।
कृष्ण कृष्णेत्यहोरात्रं संकीर्त्य शुचितामियात् ॥ २५२ ॥
अपि विश्वासघाती यस्तथा ब्राह्मणनिन्दकः ।
कीर्त्तयन् हरिनामानि पापैर्न परिभूयते ॥ २५३ ॥

---

तत् । उत्कृष्टलक्ष्मोकं यद्विष्णुरूपं परं ब्रह्म, तस्मिन्प्रकीर्तित इति सम्यन्वयः । *त्रिविधमिति* । कायिकवाचिकमानसिकभेदत्रयमित्यर्थः ।

*पवित्रो वेति* । अपवित्रः—पापयुक्तः पापेन युक्तो भवतीत्युचितमेव, परन्तु यः स्वयं पवित्रः स पापेन न लिप्यत इति कथनं कथं युज्यत इति चेत्सत्यम् । योऽपवित्रः स तस्मिन्नेव क्षणे पापमुक्तो भवति, यः पवित्रः स कदाचिदपि पापयुक्तो न भवती योजनीयम् । *ब्राह्मणनिन्दक इति* । ब्रह्म जानातीति व्युत्पत्त्या ब्रह्मविन्निन्दक इत्यर्थः । एवञ्च 'द्विषन्तः पापकृत्याम्' इति श्रुत्या ब्रह्मवि-

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्।
हंसं नारायणं चैव ह्येतन्नामाष्टकं शुभम्॥ २५४॥
शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत्।
निष्पापो हि भवेत्सोऽपि दुःस्वप्नः सुखदो भवेत्॥ २५५॥
विष्णुं नारायणं कृष्णं माधवं मधुसूदनम्।
हरिं रामं च गोविन्दं वामनं गरुडध्वजम्॥ २५६॥
शुचिः पूर्वमुखो भूत्वा भक्तिश्रद्धायुतो जपेत्।
निष्पापो हि भवेत्सोऽपि दुःस्वप्नः सुखदो भवेत्॥ २५७॥
यन्नामस्मृतिमात्रेण कोटिजन्मार्जितं खलु।
कृतं पापं भयं शोकः प्रणश्यति न संशयः॥ २५८॥

तत्रैव—

शिवस्मरणमात्रेण सर्वारिष्टाः पलायिताः।
सर्वसंकटमुत्तीर्य कल्याणं लभते नरः॥ २५९॥

---

न्निद्रायामवश्यं पापं प्राप्नोत्येव, परन्तु हरिनामोच्चारणे पापेभ्यः पीडा न भवतीत्यभिप्रायः। एतेन ब्राह्मणस्य सत्यदोषकथने कथं पापपरिभव इति शङ्का परास्ता। *हंसमिति*। सनकादिभ्यस्तत्वोपदेष्टारमीश्वरावतारम्। उक्तञ्च सात्वततन्त्रे द्वितीयपटले 'धात्रन्तिके सुसनकादिभिरीर्यमाणे चेतोगुणान्विगलितुं भगवान्स हंसः। प्रोवाच तत्वममलम्' इति। अच्युतादिनामोच्चारणादशुभफलदं दुःस्वप्नमपि स्वस्वभावं त्यक्त्वा सुखदं भवतीत्याह—*निष्पापो हीत्यादि*। पापनाशनरूपादृष्टफलवद्भयनाशनादि दृष्टफलमप्यस्तीत्याह—*भयं शोक इत्यादि*।

राम नारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन॥ २६० ॥
इत्येकादश नामानि पठेद्वा पाठयेद्यतिः ।
जन्मकोटिसहस्राणां पातकादेव मुच्यते ॥ २६१॥
नाम्नां सहस्रं दिव्यानां स्मरणे यत्फलं लभेत् ।
तत्फलं लभते नूनं रामोच्चारणमात्रतः ॥ २६२ ॥
कोटिजन्मार्जितं पापं कृषिः क्लेशे च वर्तते ।
भक्तानां णश्च निर्वाणे तेन कृष्णः प्रकीर्तितः ॥ २६३ ॥
नाम्नां सहस्रं दिव्यानां त्रिरावृत्या तु यत्फलम् ।
एकावृत्या तु कृष्णस्य तत्फलं लभते नरः ॥ २६४ ॥
कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति सद्यस्तु महापातककोटयः ॥ २६५ ॥

---

*यतिः* । ब्रह्मरूपाणामेषां जपे यतेरेवाधिकार इत्यभिप्रायः । अथवा'पाठयेत्' अनेनैव पदेन सम्बद्धं 'यतिः' इतिपदम् । तथा च ब्रह्मस्वरूपाणामेषां पाठन उपदेशदाने यतेरेवाधिकारः, पठने तु सर्वेषामित्यर्थः । तेन 'ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्य जातयः । यत्र यत्रानुकुर्वन्ति विष्णोर्नामानुकीर्तनम् ॥ सर्वपापविनिर्मुक्ताः' इत्यादिवचनैर्नविरोधः । कृष्णशब्दः कृषिधातोर्निष्पन्नः, तत्र कृषिधातुः क्लेशेऽर्थे विद्यते, क्लेशश्च कोटिजन्मार्जितपापजानुभवरूपः। णकारः नाशनेऽर्थे विद्यते । एवञ्च नामोच्चारणकर्तॄणां भक्तानां कोटिजन्मार्जितपापनाशकत्वं कृष्णशब्दप्रवृत्तिनिमित्तमागतमित्याह—*कोटिजन्मार्जितमित्यादि* । कृष्णनाम्नाप्यन्त्यन्तं गुह्यतमं यतो दिव्यनामसहस्रत्रिरावृत्तिसममित्याह—*नाम्नां सहस्रं दिव्या

सर्वेषामपि यज्ञानां लक्षणानि व्रतानि च ।
तीर्थस्नानानि सर्वाणि तपांस्यनशनानि च ॥ २६६ ॥
वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम् ।
कृष्णनामजपस्यास्य कलां नार्हति षोडशीम् ॥ २६७ ॥

तत्रैव—

हृदयकमलमध्ये शब्दजालैकसारो
निवसति भुवि येषां श्रीमहादेवशब्दः ।
क्षणमपि सकलार्थज्ञानमोक्षप्रदो वै
भवति हि भुवि तेषां सत्यमेवानवद्ये ॥ २६८ ॥
मुक्तिं वाञ्छति चेद्विभिद्य चरणावादेहपातं वसेद्
रुद्रक्षेत्रवरेऽथवा शिवगिरौ मुक्तोऽनवद्ये भवेत् ।
तत्राशक्तमना महेश्वरकथा नामानि वा कीर्तयेत्
सत्यं सत्यमिदं पुनः पुनरसौ मुक्तोऽनवद्ये भवेत् ॥२६९॥

---

नामित्यादि* । *लक्षणानीति* ॥ चिह्नभूतानि यानि व्रतान्यर्थाद् यज्ञप्रतिनिधिभूतानि । *अनशनानीति* । बहुवचनसामर्थ्यादनशन-सहचरितान्यन्यान्यपि व्रतानि ग्राह्याणि । *प्रादक्षिण्यमिति* । प्रदक्षिणा इत्यर्थेऽपाणिनीयप्रयोगः । *शब्दजालैकसार इति* । शब्द-समुदायमुख्यभूतः स च महादेवशब्दः सकलपुरुषार्थदातेत्याह—*सकलार्थेत्यादि* ।

*विभिद्येति* । छित्त्वेत्यर्थः । चरणसत्त्वे कदाचित्काशीतो बहिर्ग-मनेच्छायास्सम्भवस्तत्सम्भवमूलनाशनमेव कर्तव्यमिति भावः । *रुद्र-क्षेत्रवर इति* काश्यामित्यर्थः । *अनवद्य इति* । सम्बोधनविभक्त्यन्तम् ।

शब्दाः सन्ति सहस्रफल्गुफलदा मन्त्राः पराः कोटयो
नामैकं प्रवरं वदन्त्यतितरां तेभ्यो हरस्यादितः ।
विष्णोर्नामसहस्रतो हरिपरा वाणी च तासां वरा
नामैकं मधुसूदनस्य मननादिष्टार्थसिध्यै सकृत् ॥ २७० ॥
एकं नाम शिवस्य जातु कथयन् शृण्वंस्तथान्त्यक्षणे
रुद्रत्वं समुपैति नैष्यति पुनर्मातुश्च गर्भे क्षणम् ।
पापैर्जन्मशतार्जितैरपि तदा मुक्तो मुखं भैरवं
नावेक्षेद्यमकिङ्करस्य सहसा रौद्रैर्गणैस्संवृतः ॥ २७१ ॥
विष्णोर्नाम हि केशवाच्युत हरे गोविन्द दामोदर
प्रद्युम्नेति समुच्चरंस्तदनिशं नो बाधते तं कलिः ।
रुद्रेशान मृडेड्य हे शिव हरेत्युच्चैर्लपन्तं तथा
त्रस्ताः पातकपक्षिणो विटपिनं त्यक्त्वाऽपयान्त्यञ्जसा ॥२७२॥
यो रुद्रं परिकीर्तयेदपि हरिं कर्माणि संपूर्णतां
तस्यायान्ति शिवः स्वनाम वदतां मुक्तिप्रदस्स्याद् ध्रुवम् ।

---

अनिन्दित इत्यर्थः । *फल्गुफलदा इति* । अल्पफलदा इत्यर्थः । *दिष्टार्थसिद्ध्या इति* । दैविकार्थप्राप्त्या इत्यर्थः । 'दैवं दिष्टं भागधेयम्' इत्यमरः । *जात्वित्यादि* । कदाचिदित्यर्थः । एवञ्च कदाचिद्दैवयोगेन शिवस्य मुख्यं नाम शृणोति यदि, तदा मरणसमये शिवस्वरूपं प्राप्नोतीत्यर्थः । *भैरवमिति* । भयङ्करमित्यर्थः । *कलिः* । कलिकाल. । *विटपिनमिति* । शरीररूपिवृक्षमित्यर्थः । 'यस्य स्मृत्या च नामोक्त्या तपोदानक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्' ॥ इतिस्मृत्याच्युतनामकीर्तने यथा

अज्ञानादपि बुद्धिपूर्वमनिशं तद्गायतां किं पुन-
र्मुक्तिस्तस्य करोदरे स्थितिमतो वन्देऽनवद्ये तव ॥२७३॥
यस्यास्यं शिवनाम केवलमिदं प्रातस्तरां गायति
तेनाहोस्विदथर्ववेदसहिता वेदा अधीतास्तदा।
पापान्याशु लयं प्रयान्ति तपने प्राप्तोदयेऽद्रौ यथा
सद्यस्त्वन्धतमांसि तच्छिव शिवेत्युच्चैस्तरां कीर्तयेत् ॥ २७४॥
भीतं यः कलिलात्त्रियम्बकगिरौ पुण्येऽविमुक्तेऽनघे
क्रन्देन्नाम दिवानिशं स्मररिपोः संत्यक्तसङ्गः सुधीः ॥ २७५ ॥
नामोच्चैः प्रवरं शिवस्य कथितं संसिद्ध्ये सर्वदा।
यच्छ्रोत्रश्रवणं प्रविश्य सहसा संसारबन्धं हरेत्।
उत्सृज्यापि तपो व्रतं हृदि शिवं ध्यायन्सदा कीर्तयेद्
विश्वेश त्रिपुरान्तकेश्वर शिवेत्याधाय मूर्ध्न्यञ्जलिम् ॥२७६॥
रुद्राक्षस्य च धारणे सिततरे श्रौताग्निजे भस्मनि
श्रद्धा रुद्रजपार्चने शिवकथास्तोत्रेषु पञ्चाक्षरे।

---

सर्वकर्मसम्पूर्तिभवति तथा शिवादिनामोच्चारणेऽप्याह—*यो रुद्रं परिकीर्तयेत्यादि*। *करोदरे इति*। हस्तमध्य इत्यर्थः। *वेदाः इति*। ऋग्वेदयजुर्वेदसामवेदरूपाः। अथर्ववेदस्य वेदत्वेऽपि यत्रो त्रयाणामेव प्राधान्येनाथर्ववेदसाहित्यं वेदानां बोधितम्। *तपने*। सूर्ये। *अन्धतमांसि*। अन्धकाराः। *त्र्यम्बकगिराविति*। कैलासे। *अविमुक्ते*। काश्याम्। *क्रन्देदिति*। महता शब्देनोच्चरेत्। *मूर्ध्न्यञ्जलिम्*। मस्तके प्रणामार्थमञ्जलिं धृत्वेत्यर्थः। *सिततरे*। अतिशयधवले। *पञ्चाक्षरे*। नमः शिवायेति-

नित्यं शङ्करपादयोरपि सदा लिङ्गार्चने जायते
पुण्यैर्जन्मशतार्जितैरविकलैर्वासश्च पुण्यस्थले ॥ २७७ ॥
यो नामेश्वरमीरयेद्धर शिव श्रीनीलकण्ठेश्वर
प्रद्युम्न प्रथम त्रिनेत्र मखभित्सर्वेश रुद्रेति च ।
तं वत्सं प्रियगौरिवैति गिरिशो हुंकृत्य तस्याशुभं
सर्वाभीष्टफलं पुनः प्रकटयन्नूधोऽनवद्ये शिवः ॥ २७८ ॥
अर्चायां परमेश्वरस्य कथने नाम्नां त्रिपुण्ड्रादयोः
काश्यां वृद्धगिरौ च नैमिषवने पश्चात्तरे मुक्तिदे ।
वेदान्ते च विरक्तिमद्यतिजने स्वाभाविकी जायते
भक्तिः पुण्यवतां भवार्तिशमनी नैवेतरेषां नृणाम् ॥२७९॥
शिवेति यद्वाचि हि वर्णयुग्मं
प्रवर्तते नश्यति तस्य पापम् ।
स्वर्गस्य लाभः सुलभोऽन्यधर्माः
प्रत्यूहवन्तः कलिदोषदुष्टाः ॥ २८० ॥

---

रूपे । *प्रथम* । मुख्यः । गौः वत्समिव शिवस्त—जापकमेतीत्यन्वयः । *ऊधः* आपीनम् ।

*अचार्यामिति* । प्रतिमायामित्यर्थः । *त्रिपुण्ड्रादयोः* । भस्मरचनाविशेषरुद्राक्षयोरित्यर्थः । *वृद्धगिराविति* । हिमालये । *नैमिषवन इति* । नैमिषारण्य इत्यर्थः । *विरक्तिमद्यतिजन इति* । वैराग्ययुक्तसन्यासिसमुदाये । *भवार्तिशमनीमिति* । संसारपीडानाशिनीम् । *अन्यधर्मा इति* । यज्ञयागादिक्रियास्तीर्थयात्राश्च ।

शिव शिव शिव चेति व्याहरन्यस्त्रिवारं
त्यजति निजतनूर्यस्त्वायुपोऽन्त्यक्षणेऽसौ ।
भवति ननु भवस्यच्छेदकः पूर्वशब्दो
न भवत इतरौ तौ कल्पितान्योपकारौ ॥ २८१ ॥

उच्चैरुच्चरितैर्महेश्वरमहादेवादिभिर्नामभिः
पाषाणैर्भृशताडितानि सहसा पापोच्चतालाग्रतः ।
सद्यः पातकिनां पतन्ति हि फलान्याभोज्यमानान्यधो
यावच्चूर्णितपापतालतरवो नश्येयुरत्यद्भुतम् ॥२८२॥

मार्गे यावत्रिवारं प्रणवकसहितं यो ब्रवीति प्रदोषं
पश्यन्देवेशलिङ्गं वृषवृषणकरः शृङ्गमध्येन दृग्भ्याम् ।
सर्वे वेदा अधीताः क्रमपदसहिता मन्त्रकोट्यश्च जप्ता-
स्त्रैलोक्यं तस्य वश्यं भवति हि स विनिर्धूतपापोऽनवद्ये।२८३।

---

*पूर्वशब्द इति* । शिवेत्याकारकशब्दत्रयमध्ये पूर्वोच्चारितशिवशब्देन संसारनिवृत्तावितरौ द्वौ शब्दावन्योपकार्यस्य कल्पयितुमशक्याद्व्यर्थौ भवत इति भावः । पापेषु तालवृक्षत्वं तथा महेश्वरमहादेवादिनामसु पाषाणत्वं चारोप्य भङ्ग्यन्तरेण महादेवादिनाम्नां पापनाशकत्वमुच्यते—*उच्चैरुच्चरितैरिति* । *प्रणवकसहितमिति* । ओङ्कारसहितम् । *प्रदोषमिति* । सन्ध्यायां घटिकाचतुष्टयमितं कालविशेषम् । *देवेशलिङ्गम्* । महादेवलिङ्गम् । *वृषवृषणकरः* । नन्दिवृषणे स्थापितदक्षिणहस्तः । *शृङ्गमध्येनेति* । तस्य शृङ्गयोरुपरि स्थापितवामहस्तस्सन् । अयं शिवलिङ्गदर्शनस्य प्रकारविशेषः प्रसिद्धो दाक्षिणात्यदेशेषु । *अनवद्ये* । निष्पापे सम्बोधनविभक्त्य-

लिङ्गपुराणे—

स्मरणादेव रुद्रस्य पापसंघातपञ्जरम् ।
शतधा भेदमाप्नोति गिरिर्वज्रहतो यथा ॥ २८४ ॥
सा हानिस्तन्महाच्छिद्रं स मोहः स च विभ्रमः ।
यत्क्षणं वा मुहूर्तं वा शर्वमेकं न चिन्तयेत् ॥ २८५ ॥
द्विजो हत्वा च भूतानि भुक्त्वा ह्यन्यायतोऽपि वा ।
शिवमेकं सकृत्स्मृत्वा सर्वपापैः प्रमुच्यते ॥ २८६ ॥
नारुद्रः संस्मरेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् ।
नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ॥ २८७ ॥

तत्रैव ब्रह्मशिवसंवादे नारदं प्रति शिववाक्यम्—

व्रजन्स्तिष्ठन्स्वपन्भुञ्जन् श्वसन्वाक्यप्रपूरणे ।
नामसङ्कीर्तनं विष्णोर्हेलया कलिमर्दनम् ॥

---

न्तम् । *पापसङ्घातपञ्जरमिति* । पापसङ्घाते पञ्जरारोपणं, पञ्जरो यथा पक्षिणः सर्वतो बन्धकस्तथाऽयमपि, पापसङ्घातो जीवरूपपक्षिणो बन्धक इति बुद्ध्या कृतमिति ज्ञेयम् । *छिद्रमिति* । न्यूनत्वम् । *विभ्रम इति* । अन्यथाज्ञानम् । *शर्वमिति* । शिवमित्यर्थः । *भुक्त्वेति* । ब्राह्मणस्वमिति शेषः । *एकमिति* अन्यदेवतारहितमथवा सर्वदेवतासु मुख्यमित्यर्थः । *नारुद्र इत्यादि* । नामनुष्यो रुद्रो भूत्वा रुद्रस्मरणं कुर्यादित्यर्थः । एवमग्रेऽपि । 'देवो भूत्वा देवं यजेत्' इति स्मृतेः । अथवाऽरुद्रो यदा तदा रुद्रं न स्मरेदित्यर्थः । अभिप्रायस्तु स एव । *हेलयेति* । अनायासेन । *कलि-

कृत्वा स्वरूपतां याति भक्तियुक्तः परं व्रजेत् ।। २८८ ।।

वाराहे—

वासुदेवस्य सङ्कीर्त्य सुरापो व्याधितोऽपि वा ।
मुक्तो जायेत नियतं महाविष्णुः प्रसीदति ।। २८९ ।।

स्कन्दपुराणे—

गोविन्देति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितैः ।
दहते सर्वपापानि युगान्ताग्निरिवोत्थितः ।। २९० ।।
जन्मान्तरसहस्रेषु कोटिजन्मान्तरेषु यत् ।
गोविन्दकीर्तनात्पापं शतधा याति नारद ।। २९१ ।।
अभक्ष्यभक्षणात्पापमगम्यागमनाच्च यत् ।
नश्यते नात्र सन्देहो गोविन्दस्य च कीर्तनात् ।। २९२ ।।
स्वर्णस्तेयं सुरापानं गुरुदाराभिमर्शनम् ।
गोविन्दकीर्तनात्सद्यः पापं याति महामुने ।। २९३ ।।

---

मर्दनमिति* कलिजन्यदोषादिनाशनमित्यर्थः । *स्वरूपतामिति* । समानरूपतामित्यर्थः । *परमिति* । परं भावं सायुज्यरूपमित्यर्थः ।

*सङ्कीर्त्येति* । अत्र नाम इति शेषः । *व्याधित इति* । व्याधियुक्त इत्यर्थः । *मुक्तो जायेतेति* । *व्याधेः सुरापानजन्यपापाच्चेति शेषः । *युगान्ताग्निरिति* । प्रलयकालाग्निरिवेत्यर्थः । *सहस्रेष्विति* । अत्र सहस्रकोटिशब्दावनन्तसङ्ख्यावोधकौ । *गुरुदाराभिमर्शनम्* । गुरुस्त्रीगमनम् । एतन्महापातकत्रयं ब्रह्महत्याया अप्युपलक्षणम् । 'महापापानि गोविन्द' इत्याद्यग्रिमश्लोकदर्शनात् । *पापं यातीति* । गच्छति–नष्टं भवतीत्यर्थः ।

तावत्तिष्ठति देहेऽस्मिन् कलिकल्मषसम्भवम् ।
गोविन्दकीर्तनं यावत्कुरुते मानवो न हि ॥ २९४ ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ २९५ ॥
यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ २९६ ॥
आधयो व्याधयो यस्य स्मरणान्नामकीर्तनात् ।
तदैव विलयं यान्ति तमनन्तनमाम्यहम् ॥ २९७ ॥
गोविन्देत्युक्तमात्रेण हेलया कलिवर्धनः ।
पापौघो विलयं याति दानमश्रोत्रिये यथा ॥ २९८ ॥
गोविन्देति तथा प्रातर्मध्याह्ने वा निशागमे ।
कीर्तनात्पुण्यं प्राप्नोति मखकोटिशतोद्भवम् ॥ २९९ ॥
गवामयुतकोटीनां कन्यानामयुतायुतैः ।
तीर्थकोटिसहस्राणां तुल्यं गोविन्दकीर्तनम् ॥ ३०० ॥

---

*कलिकल्मषसम्भवमिति* । कलिपातकजम् । अत्र दुःखमिति शेषः । *आधय इति* । मानस्यः पीडाः । व्याधयः शरीरपीडाः । *कलिवर्धन इति* । पापौघविशेषणम् । विवादादिवर्धक इत्यर्थः । 'कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि' इति हैमः । *दानमिति* । अश्रोत्रिये-अवेदवेत्त्रे दानीयद्रव्यं यथा किमप्यपूर्वफलमनुत्पाद्य नश्यति तथा पापौघोऽपि फलमनुत्पाद्य नश्यतीत्यर्थः । *निशागम इति* । रात्रावित्यर्थः । *मखकोटिशतोद्भवम् । अनन्तयज्ञजमित्यर्थः ।

*गवामयुतमित्यादि* । अत्र पूर्ववदयुतादिशब्दा अनन्तसङ्-

तन्नास्ति कर्मजं लोके वाग्जं मानसमेव वा ।
यन्न क्षययते पापं कलौ गोविन्दकीर्तनम् ॥ ३०१ ॥
महापापानि गोविन्द बहुजन्मार्जितान्यपि ।
सद्यो विलयमायान्ति वासुदेवेति कीर्तनात् ॥ ३०२ ॥
इदमेवहि माङ्गल्यमिदमेव धनार्जनम् ।
जीवितस्य फलं चैव यद्दामोदरकीर्तनम् ॥ ३०३ ॥
पापिनां यानि महान्त्यापदिकान्यपि ।
स नित्यं ध्यानसम्पन्नो हरेर्नामोच्चरैर्हरेत् ॥ ३०४ ॥
प्रमादादपि संस्पृष्टो यथानलकणो दहेत् ।
तथोष्ठपुटसंस्पृष्टं हरिनाम हरेदघम् ॥ ३०५ ॥
क द्व्यक्षरं हरेर्नाम स्फुलिङ्गसदृशं ज्वलत् ।
महतां पातकानां च राशिस्तूलोपमा क च ॥ ३०६ ॥

---

स्याबोधकाः । *कर्मजमिति* । कायिकमित्यर्थः । वागादिजन्यानां पृथगुपादानात् । *महापापानीति* । ब्रह्महत्यादीनीत्यर्थः । *माङ्गल्यम्* । मङ्गलदायकम् । *धनार्जनमिति* । धनसंग्रहणमित्यर्थः । *आपद्रिकानीनि* । आपत्कालजन्यानीत्यर्थः । *हरेदिति* । नाशयेदित्यर्थः । अग्निर्यथा दहानुकूलस्वाभाविकशक्तियुक्त-स्तथा नामापि पापनाशकस्वाभाविकशक्तियुक्तमित्यभिप्रायेणाह— *प्रमादादपीति* । वस्तुतो हरिनाम्नो यावती शक्तिर्विद्यते साऽल्पांशेनैव पातकराशिं नाशयति न सम्पूर्णांशेनेति न पातकहरिनाम्नोर्नाश्यनाशकभावे समानकक्षात्वमित्यभिप्रायेणाह—*क द्व्यक्षरमिति* ।

हर हर हर शब्दमादितो वै
मुहुरभिधाय मुनीन्द्रवृन्दवन्द्यः ।
अवददखिलमेघघोषतुल्यं
सकलहिताय नमः शिवाय शब्दम् ॥३०७॥

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ३०८ ॥

हत्यायुतं पानसहस्रमुग्रं
गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयान्यसङ्ख्यातानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्यः ॥ ३०९ ॥

गोविन्दनामा यः कश्चिन्नरो भवति भूतले ।
कीर्तनादेव तस्यापि पापं याति सहस्रधा ॥ ३१० ॥

तत्रैव ध्रुववाक्यम्—

---

*आदितः* । आदावित्यर्थः । आद्यादित्वात्तसिल् । *अखिलमेघघोषतुल्यमिति* । सम्पूर्णजलधरशब्दसमानम् । एतद्वददिक्रियाविशेषणम् । अथवा 'नमः शिवाय शब्द' इति शब्दस्य विशेषणम् । *परिकर इति* । कटिबन्धनरज्ज्वादिकम् । *हत्यायुतमित्यादि* । अत्र गुर्वङ्गनाकोटिनिषेवणपदसान्निध्याद्धत्यापदेन पानपदेन च ब्रह्महत्यायास्तथा सुरापानस्य च ग्रहणम् । *स्तेयानीति* । अत्रापि पूर्वोक्तयुक्त्या स्वर्णस्तेयस्य स्तेयपदेन ग्रहणम् । पुत्रनामोच्चारयित्रजामिलवद्गोविन्दनाम्नो मनुजस्य नामोच्चारणादपि पापनाशो भवतीत्याह—*गोविन्दनामा यः कश्चिदित्यादि* ।

इयमेव परा हानिरुपसर्गोऽयमेव हि।
अभाग्यं परमं चैतद्वासुदेवं न यः स्मरेत्॥ ३११॥

तत्रैव काशीमाहात्म्ये—

पेयं पेयं श्रवणपुटकैरीशनामाभिधानं
ध्येयं ध्येयं मनसि सततं तारकं ब्रह्मरूपम्।
जल्पञ्जल्पन्प्रकृतिविकृतौ प्राणिनां कर्णमूले
वीथ्यां वीथ्यामटति जटिलः कोऽपि काशीनिवासी॥३१२॥

गोसहस्रप्रदानेन अश्वमेधफलं च यत्।
फलं यद्विद्यते विप्र तत्प्रोक्तं रुद्रकीर्तनात्॥ ३१३॥

वामनपुराणे—

अश्वमेधादिभिर्यज्ञैर्नरमेधशतैरपि।
यजितं तेन येनोक्तं हरिरित्यक्षरद्वयम्॥ ३१४॥

शृण्वन्ति ये भक्तिपरा मनुष्याः
सङ्कीर्त्यमानं भगवन्तमग्र्यम्।
ते मुक्तपापाः सुखिनो भवन्ति
यथामृतप्राशनतर्पितास्तु॥ ३१५॥

---

*उपसर्ग इति*। विघ्नमित्यर्थः।

*ईशनामाभिधानमिति*। एतत्तारकस्य विशेषणम्। क्वचिद्रामनामाभिधानमिति पाठः। *तारकं ब्रह्मरूपमिति*। अत्र 'ब्रह्म तत्तारकाख्यम्' इत्यपि पाठ उपलभ्यते। *प्रकृतिविकृताविति*। अत्र प्रकृतिपदेन शरीरग्रहणम्। तस्य विकृतौ नाशसमये। *जटिल इति*। जटाधारी शिव इत्यर्थः। *अग्र्यमिति*।

तीर्थकोटिसहस्राणि व्रतकोटिशतानि च ।
तानि सर्वाण्यवाप्नोति विष्णुनामानुकीर्तनात् ॥ १६॥

ये कीर्तयन्ति वरदं वरपद्मनाभं
शङ्खाब्जचक्रशरचापगदासिहस्तम् ।
पद्मालयावदनपङ्कजषट्पदाख्यं
नूनं प्रयान्ति सदनं मधुघातिनस्ते ॥ ३१७ ॥

अनाद्यनन्तमजरामरं हरिं
ये स्मरन्त्यहरहर्नरा भुवि ।
तत्सर्वगं ब्रह्मपदं पुराणं
ते यान्ति वैष्णवपदं ध्रुवमव्ययं च ॥ ३१८ ॥

ये मानवा विगतरागपरापरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति ।

---

श्रेष्ठम् । *तीर्थकोटिसहस्राणीति* । अत्र तज्जन्यानि पुण्यानि विवक्षितानि । साक्षात्तीर्थकोटिसहस्राणां प्राप्तेरशक्यत्वात् । *शङ्खाब्जेत्यादि* । अब्जम्—कमलम् । अत्र धार्यपदार्थानां सत्त्वं विष्णोस्तु चतुर्भुजत्वमत एकैकहस्ते क्वचित्पदार्थद्वयधारणकल्पनापेक्षया हस्तसान्निध्याच्छरचापासीनां हस्तगतत्वकल्पन युक्तम् । *पद्मालयेत्यादि* । लक्ष्मीवदनरूपकमलभृङ्गमित्यर्थः । एतत्पद्मनाभविशेषणम् । *सदनम्* । वैकुण्ठलोकम् । *मधुघातिन इति* । मधुदैत्यनाशकस्य । *अनाद्यनन्तेत्यादि* । अनेन यास्कोक्तं 'जायतेऽस्ति' इत्यादिषड्भावविकारराहित्यं सूच्यते । *ब्रह्मपदमिति* । ब्रह्मसंज्ञकपदं वैकुण्ठलोकमित्यर्थः । *पुराणमिति* । सर्वापेक्षया प्राचीनम् । *ध्रुवम* । नित्यम् । *अव्ययमिति* । नाशरहितम् ।

ते धौतपाण्डुरपटा इव राजहंसाः
संसारसागरजलस्य तरन्ति पारम् ॥ ३१९ ॥

विष्टयो ये व्यतीपाता ये च दुर्नीतिसम्भवाः।
ते नामस्मरणाद्विष्णोर्नाशमायान्त्युपद्रवाः ॥ ३२० ॥

नारायणो नाम नरो नराणां
प्रसिद्धचौरः कथितः पृथिव्याम्।
अनेकजन्मार्जितपापसञ्चयं
हरत्यशेषं स्मृतमात्र एव ॥ ३२१ ॥

कौर्मे—

कपिलाकोटिदानस्य कन्यादानायुतस्य च।
यत्फलं लभते जन्तुस्तत्फलं हरिकीर्तनात् ॥ ३२२ ॥
गोविन्देति सदा भक्त्या येन गीतं महात्मना।
सहस्रात्तेन मुच्येत पापात्तु गुरुतल्पगात् ॥ ३२३ ॥
वसन्ति यानि कोट्यस्तु पावनानि महीतले।

---

*धौतपाण्डुरपटा इति*। धौता अत एव पाण्डुराः, पटा इव भासमानाः। *विष्टय इति*। भद्रासंज्ञकोऽशुभकरणविशेषः। *व्यतिपात इति*। अशुभयोगविशेषो ज्योतिषशास्त्रे प्रसिद्धः। *दुर्नीतिसम्भवा.*। एतत्त्रयमप्येतेनोपद्रवपदेनान्वेति।

अनेकजन्मसञ्चितपापहरणरूपकर्म दृष्ट्वा चोररूपकेण परमेश्वरं नारायणं वर्णयति—*नारायणो नामेति*। हरिकीर्तनतत्परस्य सर्वमपि काम्यकर्मफलं सम्भवतीत्याह—*कपिलाकोटिदानस्येत्यादि*। *पावनानीति*। अत्र कर्माणीति शेषः।

न तानि तुल्यतां यान्ति कृष्णनामानुकीर्तने ॥ ३२४ ।

मात्स्ये—

परदाररतो वापि परापकृतिकारकः

स शुद्धो मुक्तिमायाति कृष्णनामानुकीर्तनात् ॥ ३२५ ।

गारुडे—

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।

द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ३२६ ॥

कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ।

कीर्तनादेव कृष्णस्य मुक्तवन्धः परं व्रजेत् ॥ ३२७ ॥

अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।

यस्स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥३२८॥

महतस्तपसो मूलं प्रसरः पुण्यसन्ततेः ।

जीवितस्य फलं स्वादु नियतं स्मरणं हरेः ॥ ३२९ ॥

तत्रैवाम्वरीषं प्रति शौनकवाक्यम्—

अम्वरीष शुभं वाक्यं मयोक्तं शृणु भक्तितः।

धर्मार्थकाममोक्षार्थं कुरु गोविन्दकीर्तनम् ॥ ३३० ॥

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ।

---

*कृते यदित्यादि* । अनेन कलौ हरिनामकीर्तनमेव मुख्यधर्मत्वेनोक्तम्, ध्यानादिकन्तु कृतादियुगीयो धर्म इति वोधितम् *मुक्तवन्धः परमिति* । मुक्तसंसारवन्धः सन् परं वैकुण्ठस्थानं गच्छेदित्यर्थः । *प्रसरः* । प्रवाहः । *स्मरणमिति* । नामोच्चारपूर्वकं स्मरणमित्यर्थः । *यदीच्छसीत्यादि* । अनेन नाम्ना कथं परम-

तदादरेण राजेन्द्र कुरु गोविन्दकीर्त्तनम् ॥३३१॥
इत्यादिपातकादीनां यदीच्छसि परिक्षयम्।
संयम्येन्द्रियसन्दोहं कुरु गोविन्दकीर्त्तनम् ॥ ३३२ ॥
राज्यभोगांश्च विपुलान्पुत्रमिच्छसि सम्पदः।
तदा यत्नेन महता कुरु गोविन्दकीर्त्तनम् ॥ ३३३ ॥
रणे यदि रिपुं हन्तुं त्वमिच्छसि नराधिप।
तदा सक्तमना नित्यं कुरु गोविन्दकीर्त्तनम् ॥ ३३४ ॥
पूर्वजन्मकृतानां च पापानामिच्छसि क्षयम्।
तदा भूप त्वया कार्यं नित्यं गोविन्दकीर्त्तनम् ॥३३५॥
वाजपेयसहस्राणां नित्यं पुत्रानवाप्स्यसि।
प्रातरुत्थाय भूपाल कुरु गोविन्दकीर्त्तनम् ॥ ३३६ ॥
किं करिष्यसि साङ्ख्येन किं योगैर्नरनायक।
मुक्तिमिच्छसि राजेन्द्र कुरु गोविन्दकीर्तनम् ॥ ३३७ ॥

---

पदप्राप्तिर्भवतीत्यपेक्षायां क्रमो बोधितः। *इत्यादिपातकादीनामिति*। पूर्वोक्तानि ब्रह्महत्यादिपातकानि ज्ञेयानि, नाममाहात्म्यप्रस्तावाप्तानि वचनानि न ग्रन्थकारेणोक्तानि। *इन्द्रियसन्दोह इति*। इन्द्रियसमूहः। गोविन्दकीर्तनात्केवलं परमपदप्राप्त्यादिरेव भवतीति न, किन्तु लौकिकं राज्यभोगादिकं भवतीत्याह—*राज्यभोगांश्चेत्यादि*।

साङ्ख्यादिशास्त्रैर्ये मार्गाः प्रोक्तास्ते सर्वेऽपि दुर्बलचेतसा मनुजेनानुष्ठातुमशक्या अतस्सर्वेषां कृते नामोच्चारणरूपसुलभोपायस्य विद्यमानत्वेन शास्त्राणां तेषां नास्त्युपयोग इत्यभिप्रायेणाह—*किं करिष्यसि साङ्ख्येनेत्यादि*। श्रीविष्णोरिदमेव नाम वक्तव्यमि-

गुरुदाराभिगमने जनन्या गमनेऽपि यत् ।
तत्पापं विलयं याति गोविन्देति च कीर्त्तनात् ॥ ३३८ ॥
गोवधादिसमं पापं भ्रूणहत्या समं च यत् ।
तत्पापं विलयं याति कृते गोविन्दकीर्त्तने ॥ ३३९ ॥
अभक्ष्यसम्भवं राजन्दुष्प्रतिग्रहसम्भवम् ।
तत्पापं विलयं याति कृते गोविन्दकीर्त्तने ॥ ३४० ॥

ब्रह्माण्डे—

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यच्चाभिरुचितं नाम तत्सर्वार्थेषु योजयेत् ॥ ३४१ ॥
ते शवाः पुरुषा लोके येषां हृदि न केशवः ।
केशवार्पितचिता ये न शवा न पुनर्भवाः ॥ ३४२ ॥
जप्यं नारायणायेति गीतं रामेति वानिशम् ।
समुद्धृतं महापापात्तेन कोटिकुलं न किम् ॥ ३४३ ॥
महापातकयुक्तोऽपि कीर्त्तयन्ननिशं हरिम् ।
शुद्धान्तःकरणो भूत्वा जायते पङ्क्तिपावनः ॥ ३४४ ॥

---

ति नास्ति नियमः, किन्तु सर्वेषु नामसु यत्किञ्चिद्यथारुचि ग्राह्यमित्याह—*सर्वार्थशक्तियुक्तस्येत्यादि* । *शवा इति* । केशवयुक्तत्व एव मनुष्याणां सजीवत्वमन्यथा शवतुल्यत्वमित्यर्थः । *न पुनर्भवा इति* । न पुनरुत्पत्तियुक्ता इत्यर्थः । *अनिशम्* । नित्यम् । *पङ्क्तिपावन इति* । एकपङ्क्त्युपविष्टस्तेनादिदूषितपङ्क्तिपवित्रकरा विद्वांसो ब्राह्मणाः । उक्तं च मनुना 'अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः' इत्यादि ।

इत्यष्टादशपुराणानि । अथोपपुराणानि, तत्र बृहद्विष्णुपुराणे—

क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥ ३४५ ॥
नाम्नोऽस्ति यावती शक्तिः पपानिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥ ३४६ ॥
सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वारिष्टानां हरेर्नामानुकीर्त्तनम् ॥ ३४७ ॥
नास्ति गङ्गासमं तीर्थं न देवः केशवात्परः ।
नाममन्त्रात्परो नास्ति मन्त्रो वै पापशोधनः ॥ ३४८ ॥
नाममन्त्रपरो यस्तु नित्यं भक्तिसमन्वितः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ३४९ ॥

नारसिंहे श्रीभगवद्वाक्यम्—

कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।
जलं भित्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ३५० ॥

---

*नाकपृष्ठगमनमिति* । स्वर्गगमनमित्यर्थः । *पुनरावृत्तिलक्षणमिति* । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतेः । भगवतो नाम्नोऽनन्तशक्तिमत्वं सकलपापनाशने तस्या अल्पांशस्यैवोपयोगः सर्वशक्तेरुपयोगो भवेत्तादृशं पातकं नास्त्येव लोक इत्याह—*नाम्नोऽस्ति यावती शक्तिरिति*। *सर्वोपद्रवनाशनमिति* । अत्रोपद्रवपदेन रोगातिरिक्तानामाधिभौतिकादीनां ग्रहणम् । तीर्थदेवतामन्त्रोपासकानां मुख्यं तीर्थादिकमुच्यते—*नास्ति गङ्गासममित्यादि* *जलं भित्वेति* । जलं भित्वा यथा पद्मं जलोर्ध्वमागतं भवति

पुण्डरीकाक्ष गोविन्द नारसिंह त्रिविक्रम ।
त्वामहं शरणं प्राप्त इति यस्तं समुद्धरे ॥ २५१ ॥
त्वां प्रपन्नोऽस्मि शरणं देव देव जनार्दन ।
इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् ॥ २५२ ॥

तत्रैव दूतान्प्रति यमवाक्यम्—

इत्युदीरितमाकर्ण्य कृष्णवाक्यं यमेरितम् ।
नारकाः कृष्ण कृष्णेति नारसिंहेति चुक्रुशुः ॥ २५३ ॥
यथा यथा हरेर्नाम कीर्तयन्ति स्म नारकाः ।
तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुः ॥ २५४ ॥

बृहन्नारसिंहे—

गोविन्देति वदञ्जन्तुः प्रत्यहं नियतेन्द्रियः ।
सर्वपापविनिर्मुक्तः सुरवद्भासते नरः ॥ २५५ ॥

आदित्यपुराणे—

हरेः सङ्कीर्तनं पुण्यं महापातकनाशनम् ।
सर्वकामप्रदं लोके ह्यपवर्गफलप्रदम् ॥ २५६ ॥

---

तथा नरकं भित्वा तं नरकादुद्धरामीत्यर्थः । *इति य इति* । अत्र वदतीति शेषः ।

*नारका इति* । नरकस्थाःप्राणिनः । *दिवं ययुरिति* । अयमभिप्रायः, केनचिन्निमित्तेन यमेन कृष्णशब्दोच्चारिते तत्रस्थैः नारकैः कृष्णेति शब्दं श्रुत्वा स्वयमप्युच्चरितः, स च तादृशनामोच्चारणमात्रेणैव नरकजन्यदुःखनिवृत्तिपूर्वकस्वर्गगमनस्य प्रापकः संजात इति । *अपवर्गफलप्रदमिति* । मोक्षरूपफलदमित्यर्थः । ईश्वनामोच्चार-

नाम्नापि कल्मषच्छेदः स्मरणाद्वैबुधं पदम् ।
पूजनाद्यस्य निर्वाणं तमीशं को न संस्मरेत् ॥ २५७ ॥

परमं खलु कर्णभूषणं
शिवनामश्रवणं मनोहरम् ।
तदपारसुखावहं सदा
न कृतं येन स याति यातनाम् ॥ २५८ ॥

त्वन्नामकीर्त्तनसुधारसपानपीनो
दीनोऽपि दैन्यमपहाय दिवं प्रयाति ।
पश्चादुपैति परमं पदमीश ते चै-
तद्भाग्ययोग्यकरणं कुरु मामपीश ॥२५९॥

आकर्णं सलिले निमज्य पुलिनाभोगोपधाने शिरः
कृत्वा शैलसुतापते मुररिपो गङ्गाधरेत्यालपन् ।
गृह्णन्कर्णपुटे शिवेन कृपया प्रत्याहृतं तारकं
तीरे जाह्नवि तावके तनुपरित्यागं विधास्ये कदा ॥२६०॥

---

णपूजनस्मरणफलान्याह—*नाम्नापीति* । *कल्मषच्छेदः* । पापनाशः । *वैबुधं पदमिति* । देवतास्थानं स्वर्गलोकमित्यर्थः । मौक्तिकादिभूषणापेक्षया शिवनामैव कर्णस्योत्कृष्टं भूषणमित्याह—*परमं खल्वित्यादि* । *पीन इति* । पुष्ट इत्यर्थः । *तव* । ते । *एतद्भाग्येति* । एतस्मिन्भाग्ये योग्यानि करणानि—इन्द्रियाणि यस्ये-त्यर्थकं 'मां' इत्यस्मच्छब्दविशेषणम् ।

*आकर्णमिति* । परमशिवभक्तस्येयमुक्तिः । कर्णपर्यन्तं गङ्गाजले शिरो मज्जयित्वाऽर्धान्मुखादिभागं शैलसुतापत इत्यादि-

नमः शिवायेति सकृज्जपित्वा
पापं महद्धोरमुपैति नाशम् ।
भूम्यन्तरिक्षात्परिपूर्णकाष्ठं
स्वल्पाग्निना दग्धमुपैति नाशम् ॥ ३६१ ॥
रसने रचितोऽयमञ्जलिस्ते
परनिन्दापरुषैरलं वचोभिः ।
नरकापहरं नमः शिवाये-
त्यमुमादिप्रणवं भजस्व मन्त्रम् ॥ ३६२ ॥
महादेवेति वक्तारं दृष्ट्वैव यमकिङ्कराः ।

---

पदोच्चारणायापेक्षणादनिमज्ज्य वालुकाप्रदेशविस्तारमुपवर्हसाधनं कृत्वा ततः शैलसुतापत इत्यादिपदमुच्चरन् शिवेन कर्णविवर उपदिष्टं तारकं मन्त्रं श्रवणन् गङ्गातटे कदा शरीरं त्यज्येयमे· तादृशो भाग्योदयः कदा भवेदित्यर्थः । वालुकोपधानयुतं कर्णपर्यन्तं शिरोनिमज्जनपूर्वकं शिवादिनामोच्चरणादिकं गङ्गायास्तटेऽल्पजल युत एव सम्भवति । अथवा कर्णपर्यन्तं सलिले निमज्जनं-स्नानं कृत्वेति स्वतन्त्रमेतत्कर्म न तु शिरस्सम्बन्धीति ज्ञेयम् । भूम्यन्तरिक्षादिति# । एतत्सर्वं दृष्टान्तस्वरूपम् । दृष्टान्तस्पष्टीकरणं चेत्थम् । यथा भूमावा काशे च परिपूर्णरूपमतिमहत्काष्ठमस्ति तत्स्वल्पाग्निना यथा नाशमु पैति तथा घोरमपि पापं नमः शिवायेत्याकारकमन्त्रस्य सकृज्जपेन नष्टं भवतीत्यर्थः । जिह्वायाः परनिन्दादिकरणेनानेकपातकं भवतीत्यत· स्तस्या एव प्रार्थनं वरमित्याह-#रसने रचितेत्यादि# । #आदिप्रणव· मिति । प्रथमोच्चारितप्रणवयुक्तं ॐनमः शिवायेत्याकारकमित्यर्थः । महादेवेतिजपकर्तुरन्यपावनसामर्थ्यमस्तीति दर्शयति—#महादेवेति

पलायन्ते महाभीता स्मरन्तो यमशासनम् ॥ ३६३ ॥
महादेव महादेव महादेवेति वादिनम् ।
वत्सङ्गौरिव गौरीशो धावन्तमनुधावति ॥ ३६४ ॥
कोट्यो ब्रह्महत्यानामगम्यागमकोटयः ।
सद्यः प्रलयमायान्ति महादेवेति कीर्तनात् । ३६५ ॥
महादेवेति कल्याणी वाणी यस्य मुखाम्बुजे ।
स धन्यः पावयत्येतान्स्वदृष्टिपथगोचरान् ॥ ३६६ ॥
महादेवेति वाग्वल्ली चतुरक्षरपल्लवा ।
भक्तिसिक्ता फलत्येका चतुर्वर्गफलान्यहो ॥ ३६७ ॥
महादेव महादेव महादेवेत्ययं ध्वनिः ।
सुधियो मुक्तिकान्तायाः पाणिग्रहणडिण्डिमः ॥ ३६८ ॥
महादेव महादेव महादेवेत्ययं ध्वनिः ।
मोक्षलक्ष्मीगृहद्वारकपाटोद्घाटनध्वनिः ॥ ३६९ ॥

तत्रैव—

नमो नारायणायेति यस्तु कीर्तयते मुदा ।

---

ति* । *कल्याणीति* । मङ्गलेत्यर्थः ।

*महादेवेति* । एतत्पदं चतुरक्षर इत्यनेनान्वेति । तथाच महादेवेत्याकारकचतुरक्षररूपपल्लवा वाग्रूपा वल्लीत्यर्थः । *चतुर्वर्गफलानीति* । धर्मार्थकाममोक्षसमुदायरूपफलानीत्यर्थः । *सुधिय इति* । शोभनबुद्धिमतः । *डिण्डिम इति* । मड्डुसंज्ञकं वाद्यम् । 'मड्डुडिण्डिमझर्झराः' इत्यमरः । महादेवेत्याकारकध्वनेर्मोक्षदायकत्वं चमत्कृत्या दर्शयति—*मोक्षलक्ष्मीति* ।

गुरुतल्पशतेनापि सद्यस्तेन प्रमुच्यते ॥ ३७० ॥
हृत्वा ब्राह्मणवित्तानि कीर्त्तयन्नियतं हरिम् ।
न स पापैः प्रपीड्येत वह्निनेवेन्धनं शुचि ॥ ३७१ ॥
ब्रह्माण्डशतदानस्य यत्फलं समुदाहृतम् ।
तत्फलं लभते राजन्कृते गोविन्दकीर्तने ॥ ३७२ ॥

तत्रैव चित्रगुप्तवचनम्—

अनेन यत्कृतं पुण्यं मया वक्तुं न शक्यते ।
जानाति भगवानेव विश्वव्यापी महेश्वरः ॥ ३७३ ॥
इदं पुण्यमिति ज्ञात्वा कृतं नानेन यद्यपि ।
आहरप्रहरेत्यादि नाम सङ्कीर्त्तनं सदा ॥ ३७४ ॥
करोति तेन पुण्येन दुष्कृतं भस्मसात्कृतम् ।
पापलेशोऽपि नास्यास्ति इति मे निश्चिता मतिः ॥३७५॥

तत्रैव सुद्युम्नस्य वचनम्—

जानाति को महेशस्य माहात्म्यं परमात्मनः ।

---

*गुरुतल्पेति* । गुरुभार्येत्यर्थः । 'तल्पं शय्याट्टदारेषु' इत्यमरः । *वह्निनेति* । वैरूप्येन दृष्टान्तः, यथा वह्निना शुचीन्धनं प्रपीड्यते, तथा हरिकीर्तनपरः पापैर्न पीड्यत इत्यर्थः । श्रीभगवतो नारायणादेर्ज्ञानपूर्वकनामस्मरणे यथा फलं भवति, यथा च हरनारायणेत्यादिप्रसिद्धेस्तच्छब्दैरर्थज्ञानं विनाप्युच्चरितैर्यादृक् फलं भवति, तादृक् सम्पूर्णमपि फलमर्थज्ञानं विनोच्चरितैरन्यपदोच्चारणेन तद्घटकीभूतहरशब्दतुल्यध्वनिविशेषैर्भवतीति चित्रगुप्तसंवादेन प्रदर्शयति *अनेनेत्यादि* ।

यस्य नाम्नः फलमिदमज्ञानोच्चारणादपि ॥ ३७६ ॥
ज्ञात्वा यः कीर्तयेच्छम्भोर्नामान्यमिततेजसः ।
मुक्तिः करतले तस्य स्थितेति मुनयो जगुः ॥ ३७७ ॥
सकृत्संस्मरणाच्छम्भोर्नश्यति क्लेशसंचयः ।
मुक्तिं प्रयाति स्वर्गोऽपि तस्य विघ्नोऽनुमीयते ॥ ३७८ ॥
नामसंकीर्तनादस्य भिद्यते पापपञ्जरम् ।
कथं न पूज्यते देवस्त्वया दक्ष सुदुर्मते ॥ ३७९ ॥

तत्रैव स्थलान्तरे—

ब्रह्महा वा सुरापा वा स्तेयी वा गुरुतल्पगः ।
अन्तकाले शिवं स्मृत्वा सायुज्यमाप्नुयान्नरः ॥ ३८० ॥
प्रसङ्गात्कौतुकाल्लोभाद्भयादज्ञानतोऽपि वा ।
हर इत्युच्चरन्मर्त्यः सर्वपापैः प्रमुच्यते ॥ ३८१ ॥

---

*यस्य नाम्नेति* । यस्य नाम्न एतादृशं विलक्षणं सामर्थ्यं तस्य महेशस्य सामर्थ्यं किमु वक्तव्यमिति कैमुतिकन्यायेन सर्वापेक्षयाचिन्त्यमहिमविशिष्टमहेशोऽतस्स एवोपास्य इति भावः ।

*स्वर्गोऽपीति* । स्वर्गापेक्षया मुक्तेरुत्कृष्टत्वेन मुक्तिं प्रयातः स्वर्गो विघ्नभूत इत्युचितमेव । *दक्ष इति* । सतीसंज्ञकशिवपत्नीपिता । *सुरापा इति* । सुरापानकर्ता । *स्तेयीति* । सुरापानसाहचर्यात्स्तेयीपदेन स्वर्णस्तेयिनो ग्रहणम् । *प्रसङ्गादिति* । अन्यप्रसङ्गादित्यर्थः । *हर इतीति* । कथञ्चिदपि मुखान्निर्गतस्य ध्वनेः पापनो-

नामसंकीर्तनाद्यस्य भिद्यते पापपञ्जरम् ।
स एव मोचको देवः पशून्नान्य इति श्रुतिः ॥ ३८२ ॥
नामानि च महेशस्य गृणन्त्यज्ञानतोऽपि ये ।
तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥ ३८३ ॥
ये स्मरन्ति महादेवं यदि पापरता अपि ।
ते विज्ञेया महात्मान इति सत्यं ब्रवीम्यहम् ॥ ३८४ ॥

आङ्गिरसपुराणे—

वासुदेवेति मनुज उच्चार्य भवभीतिभिः ।
उन्मुक्तः पदमाप्नोति विष्णोरेव न संशयः ॥ ३८५ ॥

वायुपुराणे—

नमो नारायणायेति यस्तु कीर्तयते मुदा ।
गुरुतल्पशतेनापि सद्यस्तेन प्रमुच्यते ॥ ३८६ ॥
हृत्वा ब्राह्मणवित्तानि कीर्त्तयन्नियतो हरिम् ।
न स पापैः प्रपीड्येत वह्निः शुचिरिवेन्धनैः ॥ ३८७ ॥
ब्रह्माण्डशतदानस्य यत्फलं समुदाहृतम् ।

---

शरूपं फलमिति भावः । *पशून्नान्य इति* । पशूनित्यनन्तरं 'प्रति'पदस्य शेषो बोध्यः । पशुपदं जीवात्मनो वाचकं 'अनणुः क्षेत्रज्ञादिपदवेदनीयो जीवात्मा पशुः' इति शैवदर्शने प्रसिद्धम् । *गृणन्तीति* । उच्चारयन्तीत्यर्थः । *भवभीतिभिरिति* । पञ्चम्यर्थेऽपाणिनीयप्रयोगः । *गुरुतल्पशतेनापीति* । गुरुस्त्रीगमनपातकादित्यर्थः । पञ्चम्यर्थे तृतीयान्तप्रयोगः । *नियत इति* । नियमितेन्द्रिय इत्यर्थः । *शुचिरिति* । शुद्ध इत्यर्थः । *इन्धनैः* । काष्ठैरित्यर्थः ।

तत्फलं लभते राजन्कृते गोविन्दकीर्तने ॥ ३८८ ॥

वृहन्नारदीये—

सकृदुच्चारयन्त्येतद्दुर्लभं चाकृतात्मनाम् ।
कलौ युगे हरेर्नाम ते कृतार्था न संशयः ॥ ३८९ ॥
हरिनामपरा ये च हरिकीर्तनतत्पराः ।
हरिपूजापरा ये च ते कृतार्थाः कलौ युगे ॥ ३९० ॥
शिवपूजापरा ये च शिवनामपरायणाः ।
ते एव शिवतुल्याश्च घोरे कलियुगे द्विजाः ॥ ३९१ ॥
शिव शङ्कर रुद्रेश निलकण्ठ त्रिलोचन ।
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः ॥ ३९२ ॥
तस्मात्समस्तलोकानां हितमेव मयोच्यते ।
हरिनामपरान्मर्त्यान्न कलिर्बाधते क्वचित् ॥ ३९३ ॥
हरेर्नामैव नामैव नामैव शरणं मम ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ ३९४ ॥
घोरे कलियुगे प्राप्ते हरिनामपरायणाः ।

---

*अकृतात्मनामिति* । अनियमितेन्द्रियाणामित्यर्थः । *ईरयन्तीति* । उच्चारयन्तीत्यर्थः ।

कलौ शिवादिनामोच्चारणादन्यत्किञ्चिदपि हितकारकं नास्तीत्याह—*तस्मात्समस्तलोकानामिति* *नामैवेति* । एवकारत्रयेणान्येषां सर्वसाधनानां व्यावृत्तिर्बोधिता । *नास्त्येवेति* । पूर्वोक्तैवकारबोधितान्यव्यावृत्तिरेव शब्देन प्रतिपादिता । *घोरे कलियुग इति* ।

समस्ताघौघनिर्मुक्ता यास्यन्ति परमां गतिम् ॥ ३९५ ॥
सकृदुच्चारयन्त्येतद्धरेर्नाम कलौ युगे ।
ते कृतार्था महात्मानस्तेषां नित्यं नमो नमः ॥ ३९६ ॥
अहोरात्रं हरेर्नाम कीर्तयन्ति ये नराः ।
कुर्वन्ति हरिपूजां च न कलिर्बाधते हि तान् ॥ ३९७ ॥
हरिनामपरा ये च घोरे कलियुगे द्विजाः ।
त एव कृतकृत्याश्च न कलिर्बाधते हि तान् ॥ ३९८ ॥
न्यूनातिरिक्तता सिद्धौ कलौ वेदोक्तकर्मणाम् ।
हरिस्मरणमेवात्र संपूर्णफलदायकम् ॥ ३९९ ॥
हरे केशव गोविन्द वासुदेव जगन्मय ।
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः ॥ ४०० ॥
यन्नामस्मृतिमात्रेण महापातकिनोऽपि ये ।
तत्पापोपरमं यान्ति दुष्टानां किमुताच्युत ॥ ४०१ ॥

---

कलिचतुर्थचरणस्वरूप इत्यर्थः । *परमाङ्गतिमिति* । मोक्षरूपमथवा वैकुण्ठस्थितिरूपमित्यर्थः ।

*तेषामिति* । अत्र यद्यपि नमःपदसान्निध्यात् 'नमः स्वस्ति स्वाहा' इत्यादिना विहितचतुर्थीकरणमुचितं तथापि वेदवत्पुराणेष्वपि बाहुलकात्कथञ्चित्समाधेयम् । *सिद्धाविति* । कर्मणां फलसिद्धौ यदा न्यूनाधिक्यमस्ति तदा हरिस्मरणं कृतं सम्पूर्णफलदायकं भवतीत्यर्थः । अत्र 'कलौ' इति पदेनान्ययुगेषु साङ्गं सम्पूर्णमेव यथाविधि कर्म फलदायकं न तत्र हरिनामसम्पूरकमिति बोधितम् । *जगन्मयेति* । एतत्स्वतन्त्रं नाम न तु विशेषणम् । *दुष्टानामिति* । अच्युत-

नमो नारायणायेति कीर्तयन्ति च ये नराः ।
निष्कामा वा सकामा वा न कलिर्बाधते हि तान् ॥४०२॥
सकृत्संस्मरणाद्विष्णोर्नश्यन्ति क्लेशसंचयाः ।
स्वर्गादियोगप्राप्तिस्तु तस्य विघ्नोऽनुमीयते ॥ ४०३ ॥
स्वपन्भुञ्जन्व्रजंस्तिष्ठन्नुत्तिष्ठंश्च वदंस्तथा ।
वदन्ति ये हरेर्नाम तेषां नित्यं नमो नमः ॥ ४०४ ॥
नामसंकीर्तनं विष्णोः क्षुत्तृट्प्रस्खलितादिषु ।
करोति सततं विप्रास्तस्य प्रीतो ह्यधोक्षजः ॥ ४०५ ॥
यन्नामोच्चारणादेव महापातकनाशनम् ।
यं समभ्यर्च्य विप्रेन्द्र परो मोक्षो भवेत् ध्रुवम् ॥ ४०६ ॥
अहो चित्रमहो चित्रमहो चित्रमिदं द्विजाः ।
हरिनाम्नि स्थिते लोकः संसारे वर्तते पुनः ॥ ४०७ ॥

---

सेवयेति शेषः, भक्तानामित्यर्थः । *सकामा इति* । निष्कामानां कामनाराहित्येन कलिबाधाभाव उचितः, सकामानामपि कलिबाध्ययोग्यतायामपि न बाध इत्येतादृशं विलक्षणं नाममाहात्म्यमिति भावः । विष्णुनामस्मरणेन सम्पूर्णमानसिकादिक्लेशनाशे यदि स्वर्गादिप्राप्तिर्भवेत्साऽपि विघ्नरूपैव यतस्तत्रापि क्षयातिशयसत्वेन क्लेशजनकत्वादित्यभिप्रायेणाह—*स्वर्गादियोगेति* । *उत्तिष्ठन्निति* । ऊर्ध्वदेशसंयोगानुकूलव्यापारं कुर्वन् । *तेषामिति* । अत्र षष्ठीकरणमपाणिनीयम् । *परो मोक्ष इति* । सायुज्यरूपः । हरिनामोच्चारणपरो मनुष्यःसंसारे कदापि न संसरति यदि संसरेन्महदाश्चर्यमित्याह—*अहो चित्रमिति*।

तत्रैव यमवाक्यम्—

हरिरिति सकृदुच्चरितं दस्युच्छलेनापि यैर्मनुजैः ।
जननीमार्गं मुक्त्वा मम पदवीं प्रविशन्ति मर्त्याः ॥४०८॥
अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥४०९॥
हरिस्मरणनिष्ठानां हरिपूजारतात्मनाम् ।
सत्यं समस्तकर्माणि यान्ति संपूर्णतां द्विजाः ॥४१०॥

नन्दिपुराणे—

सर्वदा सर्वकार्येषु ये कुर्वन्ति च पातकम् ।
नामसंकीर्त्तनं कृत्वा यान्ति विष्णोः परं पदम् ॥ ४११ ॥

वह्निपुराणे—

महाव्याधिसमाच्छन्नो राजवाधोपपीडितः ।

---

*दस्युच्छलेनापीति* । चोरक्लेशेनेत्यर्थः । *जननीमार्गमिति* । जननीजठरमार्गमित्यर्थः । *प्रविशन्तीति* । क्वचिद् 'निविशते मर्त्यं' इति पाठः । भक्तानां रोगनाशनेऽच्युतनामजप एवौषधमित्याह—*अच्युतानन्तेति* । भक्ताना हरिनामस्मरणादिकमेव सम्पूर्णकर्मसम्पादकमित्याह—*हरिस्मरणेति* ।

*सर्वदेति* । *पातकमिति* । सर्वदा नरकाद्यनिष्टजनकं पातकन्त्वसम्भवि, किन्तु 'सर्वदा सर्वकार्येषु' इतिपदसान्निध्यात्पातकपदेन कर्मवैपरीत्यमुपलक्षणीयम् । *राजवाधोपपीडित इति* । राजादिवाधायुक्तोऽपि नारायणेति नामसङ्कीर्तनान्मुक्तो भवतीत्यादिकं

नारायणेति संकीर्त्य निरातङ्को भवेन्नरः ॥ ४१२ ॥

हरन्ब्राह्मणसर्वस्वं प्रसभं वा सुरां पिबेत् ।
अपि भ्रूणहतात्पूतो जायते कृष्णकीर्त्तनात् ॥ ४१३ ॥

वायुपुराणे वैष्णवान्प्रति भगवद्वाक्यम्—

मदुक्तं सत्यमेतत्तु वाक्यं मे शृणुताधुना ।
सकृदुच्चार्य मन्नाम मे तुल्यो जायते नरः ॥ ४१४ ॥

प्रभासपुराणे—

मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर नरमात्रं तारयेत्कृष्णनाम ॥ ४१५ ॥

तत्रैव नारदकुशध्वजसंवादे श्रीभगवद्वाक्यम्—

नाम्नां मुख्यतरं नाम कृष्णाख्यं यत्परन्तप ।
प्रायश्चित्तमशेषाणां पापानां मोचकं परम् ॥ ४१६ ॥

---

सत्यनारायणकथास्थसाधुवैश्यचरित्रे सुप्रसिद्धम् । *निरातङ्क इति* । आतङ्कः-पीडा तद्रहितः।*प्रसभमिति* । बलात्कारेणेत्यर्थकं क्रियाविशेषणमेतत् । *भ्रूणहतादिति* । भ्रूणहननजन्यपातकादित्यर्थः । *मे-तुल्य इति* । अनेन सारूप्यमुक्तिरुक्ता । *सकलनिगमवल्लीति* । सम्पूर्णवेदरूपलतेत्यर्थः।*नरमात्रमिति*। अनेन सर्वजातीयसर्वमनुष्याणां नामोच्चारणेऽधिकार इति बोधितम् । *पापानामिति* । पञ्चम्यर्थेऽपाणिनीया षष्ठी, पापेभ्य इत्यर्थः ।

कालीपुराणे—

रुद्रेत्यभिहिते देवि अग्निष्टोमफलं लभेत् ॥ ४१७ ॥

विष्णोर्नामैव पुंसः शमलमपनुदत्पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगाद्विरतिमथ गुरुश्रीपदद्वन्द्वभक्तिम् ।
तत्वज्ञानं च विष्णोरिहमृतिजननभ्रान्तिबीजं च दग्ध्वा
पूर्णानन्दैकबोधे महति च पुरुषं स्थापयित्वा निवृत्तम्॥४१८

वसिष्ठलैङ्ग्ये कन्दर्पवाक्यम्—

अप्यहं योजयिष्यामि समाधिस्तं महेश्वरम् ।
न परं तत्र मे शक्तिर्हरिकीर्तनतत्परे ॥ ४१९ ॥
रागादिदूषिते चित्ते न स्पर्द्धी मधुसूदनः ।
बध्नाति न रतिंहंसः कदाचित्कर्दमाम्भसि ॥ ४२० ॥

---

*शमलमिति* । पापमित्यर्थः । *ब्रह्मादिस्थानमिति* । ब्रह्म लोकस्थानमित्यर्थः । *विरतिमिति* । वैराग्यमित्यर्थः । *तत्व ज्ञानमित्यादि* । विष्णुविषयकयथार्थज्ञानं, साक्षात्कार इति यावत् । *पूर्णानन्दैकेति* । व्यापके, आनन्दरूपे, बोध स्वरूप इत्यर्थः । 'पूर्णमदः पूर्णमिदम्' 'सत्यज्ञानमनन्तम्' 'आ नन्दं ब्रह्मणो विद्वान्' इति श्रुतिभ्यः । *निवृत्तमिति* । संसारा दिति शेषः, एतत्पुरुषविशेषणम् । *रागादीत्यादि* । यथा हंस कर्दमयुक्ते जले प्रीतिं न करोति तथा हरी रागादिदूषिते चेत सि न प्रादुर्भवति, एवं च हरिकीर्तनतत्परत्वे तत्र हरेः प्रादुर्भावे

तत्रैव—

शिवेति वाचं यो नित्यं चाण्डालोऽपि वदेद्धरिम् ।
सह तेन वदेद्वाचं सह तेन वसेत्सदा ॥ ४२१ ॥

केदारखण्डे—

द्व्यक्षरं नाम येषां वै जिह्वाग्रे संस्थितं सदा ।
ते वै मनुष्यरूपेण रुद्रा नास्त्यत्र संशयः ॥ ४२२ ॥
शिवेति द्व्यक्षरं नाम त्रायते महतो भयात् ।
तस्माच्छिवश्चिन्त्यतां च स्मर्यतां च द्विजोत्तमैः ॥४२३॥
किं तु वै बहुनोक्तेन शिव इत्यक्षरद्वयम् ।
उच्चारयन्ति ये नित्यं ते रुद्रा नात्र संशयः ॥ ४२४ ॥
शिवेति द्व्यक्षरं नाम व्याहरिष्यन्ति ये जनाः ।
तेषां स्वर्गश्च मोक्षश्च भविष्यति च नान्यथा ॥ ४२५ ॥
शिवेति द्व्यक्षरं नाम यैरुदीरितमुच्चकैः ।
ते धन्यास्ते महात्मानः कृतकृत्यास्त एव च ॥ ४२६ ॥

---

मम सामर्थ्यं न भवेदित्यर्थः । *शिवेति वाचमिति* । *सह तेन वदेदिति* । अत्र 'अपि गिरिं शिरसा भिन्द्यात्' इतिवत् सम्भावनायां लिङ् न तु विधौ, विध्यर्थे सर्वधर्मशास्त्रवचननिचयविरोधप्रसङ्गात् । सदा मनुष्यस्य शिवनामजपपरत्वे रुद्ररूपत्वमित्याह—*द्व्यक्षरमिति* । शिवनामजपादेः सकारणत्वमाह *शिवेतिद्व्यक्षरं नामेति* । स्वर्गस्य मोक्षस्य च शिवनामजप एव साधनं नान्यदित्याह—*शिवेति द्व्यक्षरं नामेति* ।

शिवेत्यक्षरजपोऽन्यकर्मजपुण्यसम्पादक इति दृष्टान्तप्रदर्शने-

ब्रह्मोत्तरखण्डे—

अहो यदेषा शिवनामवाणी
प्रमादतो वाप्यसती जगाद ।
तेनैव भूयः सुकृतेन शम्भोः
बिल्वाङ्कुराराधनपुण्यमाप ॥ ४२७ ॥

महापातकविच्छित्त्यै शिव इत्यक्षरद्वयम् ।
अलं नमस्क्रियायुक्तो मुक्तये कल्पितो मनुः ॥ ४२८ ॥

काशीखण्डे—

शिवनामपवित्रा वाक् निरगात्क हारिणी ।
शिवनामस्मरणं च मदीयमपि पातकम् ॥ ४२९ ॥
मन्दीभूतं ततस्तेन प्रवेशं लब्धवानहम् ।
नित्यं विश्वेश विश्वेश विश्वनाथेति यो जपेत् ॥
त्रिसन्ध्यं तं सुकृतिनं जपाम्यहमपि ध्रुवम् ॥ ४३० ॥

---

नाह-*अहो यदेति* । *अलमिति* । पर्याप्तमित्यर्थः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । *मनुरिति* । मन्त्र इत्यर्थः । 'यन्मनुरब्रवीत्तद्भेषजम्' इति श्रुतिव्याख्याने मनु· शब्दस्य मन्त्रपरत्वेनापि विवरणदर्शनात् । *शिव· नामेति* । शिवेत्याकारकनामजपेन पवित्रा वाणीत्यर्थः । *हारिणी* । अत्र पापस्येति शेषः । *स्मरणं चेति* । अत्रापि हारीति शेषः । *सुकृतिनमिति* । पुण्यवन्तमित्यर्थः ।

तत्रैव विष्णुवचनम्—

कृत्वापि सुमहत्पापं त्वां यः स्मरति भावतः ।
आधारं जगतामीशं तस्य पापं विलीयते ॥ ४३१ ॥

तव नामानुरक्ता वाक् पुंसो यस्य जगत्पते ।
अप्यद्रिकूटतुलितमेनस्तं न भवाध्यते ॥ ४३२ ॥

रजसा तमसा विवर्द्धितं
क्व नु पापं परितापदायकम् ।
क्व च ते शिवनाम मङ्गलं
जनजीवातु जगद्रुजापहम् ॥ ४३३ ॥

यदि जातु चिदन्धकद्विष-
स्तवनामोष्ठपुटाद्विनिःसृतम् ।
शिव शङ्कर चन्द्रशेखरे-
त्यसकृत्तस्य न संसृतिः पुनः ॥ ४३४ ॥

अथसंहिताः, तत्र जमदग्निसंहितायाम्—

लब्धं परं पदं तेन जन्मनां कोटिभिर्जितम् ।
कीर्तितं येन मुनिना हरिरित्यक्षरद्वयम् ॥ ४३५ ॥

---

*भावत इति* । भक्तित इत्यर्थः । *आधारमिति* । इदं त्वामिति-पदेनान्वेति । *अनुरक्तेति* । तत्परेत्यर्थः । *अद्रिकूटतुलितमिति* । पर्वतशिखरतुल्यमित्यर्थः । *एनः* । पापम् । *जनजीवात्विति* । लोकजीवितवत्स्थितम् । जीवातुशब्दोऽन्ने जीवने च प्रसिद्धः कोषे । *जगद्रुजापहमिति* । लोकपीडानाशकमित्यर्थः । *अन्धकद्विष इति* । शिवस्येत्यर्थः । *संसृतिरिति* । संसार इत्यर्थः ।

ज्ञातमध्यात्मशास्त्रं च प्राप्तं तेनामृतं महत् ।
कीर्तितं येन मुनीना हरिरित्यक्षरद्वयम् ॥ ४३६ ॥

जाबालिसंहितायाम्—

हरेर्नाम परं जप्यं ध्येयं गेयं निरन्तरम् ।
कीर्तनीयं च बहुधा निर्वृर्ति बहुधेच्छता ॥ ४३७ ॥

विश्वामित्रसंहितायाम्—

विश्रुतानि बहून्येव तीर्थानि विविधानि च ।
कोट्यंशेनापि तुल्यानि नामकीर्तनतो हरेः ॥ ४३८ ॥

सौरसंहितायाम्—

गोविन्दनाम नियतं परिकीर्तनीयं
धत्ते हि निर्वृतिमिदं सततं जनेषु ।
जन्मार्जितानि विविधान्यपहाय दुःखा-
न्यत्यन्तधर्मनिचयं हरिलोकमेति ॥ ४३९ ॥

ससागरां महीं दत्वा शुद्धकाञ्चनपूरिताम् ।
यत्फलं लभते लोके तत्फलं हरिकीर्तनात् ॥ ४४० ॥

---

हरिरित्यक्षरद्वयमध्यात्मशास्त्रज्ञानेनामृतेन च समानमित्याह— *ज्ञातमध्यात्मशास्त्रं चेति* । *निर्वृतिमिति* । *बहुधेति* । अनेकप्रकारकसुखमित्यर्थः । *विश्रुतानि* । प्रसिद्धानि । *तीर्थानि* । पुण्यस्थानानि । अथवा विश्रुतानि—विशेषेणाकर्णितानि, तीर्थानि शास्त्राणीत्यर्थः । 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च' इति मेदिनी । *धर्मनिचयमिति* । आत्यन्तिकधर्मः—मोक्षधर्मस्तस्य निचयं—स्थान·

सूतसंहितायाम्—

यद्गोविन्दपदं नरः प्रतिपदं सङ्कीर्तयंस्तत्क्षणा-
न्मुक्तो दुष्कृतराशितो बुधजनैः पूज्यो विवस्वत्प्रभः ।
त्यक्त्वा संसृतिमृत्युदुःखपटलं संशुद्धचित्तः पुमान्
विष्णोर्वेश्मनि मुक्तिमेति विबुधैराशास्यकीर्तिर्महान् ॥४४१॥

तत्रैव—

महादेवेति यो ब्रूयात्प्रातरुत्थाय नित्यशः ।
जन्मान्तरसहस्रेषु कृतं पापं विनश्यति ॥ ४४२ ॥
ब्राह्मे मुहूर्ते चोत्थाय शुचिर्भूत्वा समाहितः ।
शिवेति कीर्तयन्सर्वैः पातकैस्तु विमुच्यते ॥ ४४३ ॥

शातातपसंहितायाम्—

गङ्गासागरसङ्गमे त्रिपथगां मज्जन्नरो यत्फलं
विन्दत्याशु तदेव चाष्टगुणितं रामेति सङ्कीर्तनात् ।
लब्ध्वा चोत्तमराजभोगमतुलं यत्सागरे स्नानतो
नाम्नां मे किल कीर्त्तनात् मयि नरः सायुज्यमायात्यहो ॥४४४॥

---

*रूपम्, एतद्धरिलोकस्य विशेषणम् । *प्रतिपदमिति* । मार्गे प्रतिचरणस्थापनवेलमित्यर्थः । *दुष्कृतराशितः* । पापराशितः । *विवस्वत्प्रभः* । सूर्यकान्तिवत्कान्तियुक्तः । *पटलमिति* । समुदायमित्यर्थः । *विष्णोर्वेश्मनीति* । वैकुण्ठलोक इत्यर्थः ।

*ब्राह्मे मुहूर्त इति* । पञ्चपञ्चाशःकालात्मक इत्यर्थः । *समाहित इति* । एकाग्रचित्तो भूत्वेत्यर्थः । *त्रिपथगां* । गङ्गाम् । *सागरे स्नानत इति* । स्नानक्रियाया अधिकरणत्वविवक्षया

वौधायनसंहितायाम्—

इष्टापूर्तानि कर्माणि सुवहूनि कृतान्यपि ।
भवहेतूनि तान्येव हरेर्नाम तु मुक्तिदम् ॥ ४४५ ॥

सनत्कुमारसंहितायाम्—

हर हर इति शब्दमादितो वै
मुहुरभिधाय मुनीन्द्रवृन्दवन्द्यः ।
अपठदखिलमेघघोषतुल्यं
सकलहिताय नमःशिवायमन्त्रम् ॥ ४४६ ॥
तं श्रुत्वा ते महानन्दाः स्फुटस्पष्टाक्षरं भियम् ।
विनष्टाशेषपापौघा ज्योतिर्मयवपुर्धराः ॥ ४४७ ॥

ब्रह्मसंहितायां नामकीर्तनप्रस्तावे वौधायनं प्रति श्रीकृष्णवाक्यम्—

मन्नामकीर्तनफलं विविधं निशम्य
न श्रद्दधाति मनुते यदुतार्थवादम् ।
यो मानुषस्तमिह दुःखचये क्षिपामि
संसारघोरविविधार्तिनिपीडिताङ्गम् ॥ ४४८ ॥

---

सप्तमी । *इष्टापूर्तानीति* । क्रतुप्रभृति कर्म, तथा पुष्करिण्या-दिनिर्माणकर्म । उक्तञ्च मनुना 'एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते' ॥ तथान्यत्र 'पुष्करिण्यः सभावापीदेवतायतनानि च । आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेत' ॥ इति । *भवहेतूनीति* । संसारकारणकानीत्यर्थः । *मादितः* । प्रथमत इत्यर्थः । *स्फुटस्पष्टेति* । एतन्मन्त्रस्य विशे-षणम् । *दुःखचये* । दुःखसमूह इत्यर्थः । *संसारघोरेति । संसारे

तापनीयसंहितायाम्—

सर्वेषामेव रोगाणां प्रायश्चित्तं परं स्मृतम् ।
अपमृत्युप्रशमनं मूलाविद्याविनाशनम् ॥
कृष्णसङ्कीर्तनाविधिमतो नान्यद्वदाम्यहम् ॥ ४४९ ॥

पराशरसंहितायां साम्बं प्रति व्यासवाक्यम्—

न साम्ब व्याधिजं दुःखं हेयं नानौषधैरपि ।
हरिनामौषधं पीत्वा व्याधिस्त्याज्यो न संशयः ॥ ४५० ॥
कोटिजन्मार्जितं पापमौषधैः शान्तिमेति किम् ।
कीर्तनीयं हरेर्नाम भवव्याधेस्तदौषधम् ॥ ४५१ ॥

सुश्रुतसंहितायाम्—

दृष्टः कृष्णो द्वारकायां स्मृतो वा शुद्धमानसैः ।
कीर्तितो बालकैर्वापि जितजन्मसहस्रकम् ॥ ४५२ ॥

ईशानसंहितायाम्—

भवमायापरिक्लान्तमर्त्यानां स्मृतिमात्रतः ।
भवं हरति यो नित्यं वन्देऽहं तं भिषक्तमम् ॥ ४५३ ॥

---

या घोरा—भयङ्करा विविधा—अनेकप्रकारा आर्तयः—पीडास्ताभिर्नितरां पीडितशरीरमित्यर्थः । *प्रायश्चित्तमिति* । निवर्तकमित्यर्थः । *मूलाविद्येति* । संसारकारणभूताविद्येत्यर्थः । *औषधैरिति । प्रायश्चित्तैरित्यर्थः । *शान्तिमेति किमिति* । न शान्तिमेतीत्यर्थः । कृष्णदर्शनस्मरणश्रवणस्य समानं फलमित्याह—*दृष्टः कृष्ण इति*। *भवमायापरिक्लान्तेति* । संसारमायापीडितेत्यर्थः । *भवं* । संसारम् । *भिषक्तममिति* । चिकित्सकश्रेष्ठमित्यर्थः । यमं प्रति साक्षाच्छ्रिया-

तत्रैव यमः—

यन्नाम सकृदुच्चार्य महापातकिनो नराः ।
निष्कल्मषा भविष्यन्ति तं प्रपद्ये महेश्वरम् ॥ ४५४ ॥

शिवः—

महादेवादिशब्दस्तु जिह्वाग्रे यस्य वर्तते ।
मम प्रियतमा ह्येते पूज्याः सर्वे त्वया यम ॥ ४५५ ॥

यमः—

यन्नामकीर्तनात्सद्यः पतितोऽपि विशुध्यति ।
किं पुनस्ते महात्मानस्त्वयि भक्तिसमन्विताः ॥ ४५६ ॥
महादेवादिनामानि ज्ञानतोऽज्ञानतोऽपि वा ।
ईरयन्ति जना ये च ते सर्वे शिववन्मताः ॥ ४५७ ॥
शिव शङ्कर विश्वेश महादेवाम्बिकापते ।
हरिकेश विरूपाक्ष पाहि मां पापिनं हर ॥ ४५८ ॥
प्रसङ्गादथवा लोभादीरयन्ति च ये जनाः ।
प्राणत्राणकरं मन्त्रं ते यान्ति न यमान्तिकम् ॥
ते चैव सर्वलोकेषु पूज्यन्ते शिववन्नराः ॥ ४५९ ॥

---

शास्ति, 'महादेवशब्दजपकर्ता मम प्रियत्वात्त्वया पूज्य'इतात्याह—*महादेव इति* ।

*शिववन्मता इति* । यथा शिवो मान्यस्तथा मान्या इत्यर्थः । *विरूपाक्ष इति*। विविधानि रविचन्द्राग्निरूपाण्यक्षीण्यस्येति तथा । अथवा विरूपेष्वप्यक्षि कृपादृष्टिर्यस्येति वा । *लोभादिति* । परार्थं मन्त्रजपकर्तुर्द्रव्यादिलोभादित्यर्थः । *प्राणत्राणकरं मन्त्रमिति* । त्र्य-

कात्यायनसंहितायाम्—

नामसङ्कीर्तनाज्जातं पुण्यं नोपचयन्ति ये ।
नानाव्याधिसमायुक्ताः शतजन्मसु ते नराः ॥ ४६० ॥
अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥ ४६१ ॥

वैश्वानरसंहितायाम्—

न देशकालनियमः शौचाशौचविनिर्णयः ।
परं सङ्कीर्तनादेव रामरामेति मुच्यते ॥ ४६२ ॥
शृणोति नित्यं यो भक्त्या ब्रूयाद्रात्रिं दिवं नरः ।
महापातककोटिभ्यो मुक्तः पूतो भवेत्तु सः ॥ ४६३ ॥
अनन्तेत्यच्युतेत्येव गोविन्देति च कीर्तनात् ।

---

म्यकमित्याकारकमित्यर्थः । 'मृत्योर्मुक्षीयमामृतात्' इति तत्पदघटित-मन्त्रलिङ्गात् । नानाव्याधेः कारणं नाममन्त्रजपाभाव इत्याह—*नाम सङ्कीर्तनादिति* । *निरय इति* । नरक इत्यर्थः ।

रामादिनामजपो यदा कदापि कर्तव्यो नेतरकर्मवत्कश्चिद् नियम इत्याह-*न देशेति* । *मुक्तः पूत इति* । प्रथमतः पापान्मुक्तोऽनन्तरम्पवित्र इत्यर्थः । ननु पापान्निर्मुक्तिर्नाम पाप-राहित्यं, तदेव पूतत्वं, तथा च कथं प्रथमतः पापान्मुक्तत्वम-नन्तरञ्च पूतत्वमुच्यते तयोरेकत्वेन भिन्नकालवर्तित्वाभावादिति चेन्न । पापान्मुक्तत्वमथ च पूतत्वं भिन्नमेव कर्म, भिन्नकारणक-लापसाध्यत्वात् । पापान्मुक्तत्वं प्रायश्चित्तादिना भवति, पूतत्वं च नित्यसन्ध्यादिकर्मभिर्भवति । प्रकृते तूभयमपि नामोच्चारणादेव भव-

सर्वरोगविनिर्मुक्तो मुक्तिमाप्नोति दुर्लभाम् ॥ ४६४ ॥

वात्स्यायनसंहितायाम्—

तुलापुरुषदानानि दत्वा यत्फलमश्नुते ।
सङ्कीर्त्य हरिरित्येवं मुक्तो जायेत मानवः ॥ ४६५ ॥
गोघ्नः सुरापो नियतं हरिरित्यसकृद्वदन् ।
एनसः स च मुक्तात्मा हरेस्सायुज्यमाप्नुयात् ॥ ४६६ ॥

पातञ्जलसंहितायाम्—

सम्पूर्णां पृथिवीं दत्वा नरो यत्फलमश्नुते ।
वासुदेवेति सङ्कीर्त्य सकृत्तत्फलमश्नुते ॥ ४६७ ॥
नृहरे इति यो नित्यं कीर्तयेच्छुचिबुद्धिमान् ।
विमुक्तः सर्वपापेभ्यो हरिसायुज्यमृच्छति ॥ ४६८ ॥

कैलाससंहितायाम्—

यत्पादपद्मस्मरणाद्यच्छ्रीनामजपादपि ।
न्यूनं कर्म भवेत्पूर्णं तं वन्दे साम्बमीश्वरम् ॥ ४६९ ॥

---

तीत्यभिप्रायः । *दुर्लभामिति* । अन्योपायैः सर्वदाऽसाध्यामित्यर्थः । *तुलापुरुषदानानीति* । तत्प्रकारश्च 'कृत्वा विधिवद्धोमं सुस्नातस्तीर्थवारिणा । तुला पूज्या विधानेन ब्राह्मैर्मन्त्रैश्च वैदिकैः ॥ पश्चात्तदारुहेच्छिक्यं प्राङ्मुखोदङ्मुखोऽथवा ॥ इत्यादिनाऽग्निपुराणे 'अनेन विधिना यस्तु तुलापुरुषमाचरेत् । प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरे वसेत्'॥ इत्यादिना च मत्स्यपुराणे स्पष्टः । *हरिरित्येवमिति* । अत्र तत्फलमश्नुत इति शेषः । *सकृदिति* । एतद्वासुदेवपदेनान्वेति । *शुचिबुद्धीति*। शुद्धबुद्धिरित्यर्थः । *यच्छ्रीनामेति* । यस्य श्रीयुक्त

वैशम्पायनसंहितायाम्—

सर्वधर्मबहिर्भूतः सर्वपापयुतस्तथा ।
मुच्यते नात्र संदेहो विष्णुनामानुकीर्तनात् ॥ ४७० ॥

बृहद्वासिष्ठसंहितायां राजकुमारं प्रति वशिष्ठवाक्यम्—

हित्वा सकलपापानि लब्ध्वा सुकृतसंचयम् ।
स पूतो जायते धीमान्मुरजिन्नामकीर्तनात् ॥ ४७१ ॥
कृष्ण कृष्णेति रामेति कीर्त्तयन् हरितत्परः ।
राजसूयसहस्राणां फलमाप्नोति मानवः ॥ ४७२ ॥
नामसङ्कीर्तनं चैव गुणानां चापि कीर्तनम् ।
भक्त्या श्रीरामचन्द्रस्य वचसः शुद्धिरिष्यते ॥ ४७३ ॥

लीलावतीये कूर्मध्वजं प्रति खाण्डिक्यवाक्यम्—

मातृहा पितृहा वापि सुरापो गुरुतल्पगः ।
मुच्यते नात्र संदेहः कृष्ण कृष्णेति कीर्तनात् ॥४७४॥

भार्गवीये—

कोटिशो मनुजानां यद्दुरितं समुपस्थितम् ।

---

नामजपादित्यर्थः । *सर्वधर्मबहिर्भूत इति* । सर्वधर्मपरित्यागाद्बहिर्भूत इत्यर्थः । *राजसूयसहस्राणामिति* । यज्ञविशेषाणां 'ते च राजा राजसूयेन यजेत' इति श्रुतिप्रसिद्धाः । *गुणानामिति* । शौर्यौदार्यादीनामित्यर्थः । *श्रीरामचन्द्रस्येति* । एतन्नामसङ्कीर्तनगुणपदाभ्यामन्वेति । *वचसश्शुद्धिरिति* । नामसङ्कीर्तनादिकमेव वचसश्शुद्धिरित्यर्थः । भगवन्नामजपान्वयस्य तथान्येषामपि पातकं नश्यतीत्याह-*कोटिश इति* ।

रामरामेति सङ्कीर्त्य तन्नाशयति मानवः ॥ ४७५ ॥

गालवीये—

सर्वक्लेशयुतो वापि सर्वरोगादिसंयुतः ।
सर्वपापयुतो यस्तु नृहरेर्नामकीर्तनम् ॥
कृत्वा विमुच्य दुःखानि याति ब्रह्म सनातनम् ॥ ४७६ ॥

अगस्त्यसंहितायाम्—

नामसङ्कीर्तनं चैव गुणानामपि कीर्तनम् ।
भक्त्या श्रीरामचन्द्रस्य वचसः शुद्धिरिष्यते ॥ ४७७ ॥

तत्रैव हालोस्यमाहात्म्ये—

महादेवो महेशश्च शङ्करो वृषभध्वजः ।
शूली कामान्तको देवो हरः श्रीकण्ठसंज्ञितः ॥ ४७८ ॥
इश्वरश्चाम्बिकानाथो रुद्रः शिव इतीरितः ।
एतानि शिवनामानि त्रिसन्ध्यं यः पठेन्नरः ॥ ४७९ ॥
गोघ्नश्चैव कृतघ्नश्च भ्रूणहा वीरहा तथा ।
स्त्रीबालघातकश्चैव सुरापो वृषलीपतिः ॥
सर्वदोषविनिर्मुक्तः शिवलोके महीयते ॥ ४८० ॥

---

*सर्वक्लेशेति । अत्र क्लेशपदेन मानसिकक्लेशानां ग्रहणं रोगपदसान्निध्यात् । *त्रिसन्ध्यमिति* । प्रातर्मध्याह्नसायमिति कालत्रय इत्यर्थः । *भ्रूणहेति* । गर्भपातनम् । 'भ्रूणहत्यां वा एते घ्नन्ति' इति श्रुतौ, 'अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ' इति याज्ञवल्क्यस्मृतौ च तथैव दृष्टत्वात् । *वीरहेति* । नष्टगृह्याग्निकः । 'वीरहत्यां वा एते घ्नन्ति' इति श्रुतौ तथैव दृष्टत्वात् । *महीयत इति*।

तत्रैव—

रमते सह रामाभिः प्राप्य विद्याधरं पदम् ।
अस्य भावनया नाम्नः कीर्तनादपि भार्गव ॥ ४८१ ॥
माङ्गल्यं सर्वपापघ्नमायुष्यं तापशोधनम् ।
भुक्तिमुक्तिप्रदं पुण्यं वासुदेवस्य कीर्तनम् ॥ ४८२ ॥

आर्ता विषण्णाः शिथिलाश्च भीताः
घोरेषु च व्याधिषु पच्यमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥ ४८३ ॥

येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम् ।
कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान् ॥ ४८४ ॥
शमायालं जलं वह्नेस्तमसो भास्करोदयः ।

---

पूज्यत इत्यर्थः । *पदमिति* । लोकमित्यर्थः । *भावनयेति* । भक्त्येत्यर्थः । *तापशोधनमिति* । त्रिविधतापशोधनमित्यर्थः । *शिथिला इति* । आलस्ययुक्ता इत्यर्थः । *पच्यमाना इति* । व्याधिभिः पीड्यमाना इत्यर्थः । *शब्दमात्रमिति* । अनेनार्थस्य सहकारिकारणस्य भक्त्यादेर्वाऽपेक्षा नास्तीति मात्रपदेन बोधितं, तथा सङ्कीर्तनाव्यवहितोत्तरकाल एव दुःखाभावपूर्वकसुखस्य प्राप्तिरिति सङ्कीर्त्येत्यत्रत्यल्यप्प्रत्ययेन बोधितम् ।

*जगद्धातुरिति* । जगद्धारकस्येत्यर्थः । *शमायालमिति* । नाशायेत्यर्थः । *तमस इति* । अत्रापि शमायालमितिपदानुषङ्गः ।

शान्तिः कलेरघौघस्य नामसङ्कीर्तनं हरेः ॥ ४८५ ॥
नाम सङ्कीर्तनं विष्णोः क्षुत्तृट्प्रस्खलितादिषु ।
यः करोति महाभाग तस्य तुष्यति केशवः ॥ ४८६ ॥
नामसङ्कीर्तनं कृत्वा क्षुत्तृट्प्रस्खलितादिषु ।
वियोगं शीघ्रमायाति सर्वानर्थैर्न संशयः ॥ ४८७ ॥

नारदं प्रति श्रीभगवद्वाक्यम्—

कान्तारवनदुर्गेषु कृत्स्नास्वापत्सु सम्भ्रमे ।
दस्युभिः सन्निरुद्धश्च नामभिर्मा प्रकीर्तयेत् ॥ ४८८ ॥
तस्मात्त्वयैतत्सततं निशासु,
दिनेषु चैवेश्वरमाधवस्य ।
संकीर्तनं कार्यमशेषपाप-
विमोक्षहेतोरभवाय चैव ॥ ४८९ ॥

शिवं प्रति श्रीभगवद्वाक्यम्—

सत्यं ब्रवीमि ते शम्भो गोपनीयमिदं मम ।
मृत्युसञ्जीवनं नाम कृष्णाख्यमवधारय ॥ ४९० ॥

सौरधर्मोत्तरे—

क्वचिद्भगवतो नाम न त्वया कीर्तितं मुदा

---

*अघौघस्येति* । अघस्य-पापस्य, ओघः-समुदायो यस्मिन्निति क
विशेषणम् । *प्रस्खलितादिष्विति* । प्रस्खलनम्—पतनम् , आदिप
देनैतत्सदृशानि कर्माणि ग्राह्याणि । *सम्भ्रम इति* । सङ्कट इत्यर्थः
*अभवायेति* । अनुत्पत्त्यै, मोक्षायेति यावत् । *गोपनीयम्* । यत
मृत्युसञ्जीवनमतो गोपनीयं सर्वत्राप्रकाशनीयमित्यर्थः । *मुदेति*

येन संसारचक्रेऽस्मिन्मुहुरुद्भ्राम्यसेऽनघ ॥ ४९१ ॥

भविष्योत्तरे—

कायेन मनसा वाचा सुमहद्दुष्कृतं कृतम् ।

राम रामेति संकीर्त्य सद्यस्तस्माद्विमुच्यते ॥ ४९२ ॥

कोटिपापानि सन्त्येव स्वल्पानि च बहूनि च ।

न तानि भूयो बाधन्ते हरेर्नामानुकीर्तनात् ॥ ४९३ ॥

अथागमशास्त्राणि, तत्र बृहद्गौतमीये—

कुष्ठरोगी भवेल्लोके बहुधा ब्रह्महा नरः ।

सकृदुच्चरितं नाम हरेस्तत्क्षपयत्यहो ॥ ४९४ ॥

विष्णुयामले रुद्रं प्रति श्रीकृष्णवाक्यम्—

मम नामानि लोकेऽस्मिञ्छ्रद्धया यस्तु कीर्तयेत् ।

तस्यापराधकोटिस्तु क्षमाम्येव न संशयः ॥ ४९५ ॥

गौतमीयतन्त्रे शिविराजानं प्रति नारदवाक्यम्—

न तादृशं महाभाग पापं लोकेषु विद्यते ।

---

आनन्देन प्रेम्णेत्यर्थः। *संसारचक्र इति* । चक्रवद्भ्रमणशील इत्यर्थः।

*भविष्येति* । एतत्सौरधर्मोत्तरीयं च पूर्वागतमपि–आदर्शपुस्तकानुरोधेन तथैव स्थापितम् ।

*कायेनेति* । ब्राह्मणहननादिकरणम् । *मनसेति* । गुरुद्रोहादिकरणम् । *वाचेति* । परहृदयविदारणपरकशब्दोच्चारणम् । *कोटिपापानीति* । कोटिसङ्ख्याकानि पापानीत्यर्थः । *कुष्ठरोगीत्यादि* । अनेन रोगनाशकत्वं पापनाशकत्वं च सूच्यते । सर्वमप्यनेकविधं पापं हरिनाम्ना नश्यति न किञ्चिदुर्वरितं सद्धर्मशास्त्रीयं किञ्चिन्निमित्तमपेक्षतेत्यभिप्रेत्याह—*न तादृशमिति* ।

यादृशं धरणीनाथ हरिनाम्ना न दह्यते ॥ ४९६ ॥

आश्वलायनतन्त्रे—

ये कीर्तयन्ति नामानि विष्णोरमिततेजसः ।
सर्वधर्मवहिर्भूतास्ते यान्ति परमां गतिम् ॥ ४९७ ॥

वैरिञ्चितन्त्र इन्द्रद्युम्नं प्रति ब्रह्मवाक्यम्—

पूजयस्व जगन्नाथं सर्वतन्त्रेषु गोपितम् ।
गुह्याद्गुह्यतरं नाम कीर्तयस्व निरन्तरम् ॥ ४९८ ॥
यस्तु संकीर्तयेन्नित्यं जगन्नाथमतन्द्रितः ।
विमुक्तः सर्वपापेभ्यो मुक्तवन्धः परं व्रजेत् ॥ ४९९ ॥

मेरुतन्त्रे—

नाम्नां मुख्यतरं विष्णोर्जगन्नाथमुदीरितम् ।
नातः परतरं नाम त्रिषु लोकेषु गीयते ॥ ५०० ॥

---

*अमिततेजस इति* । अगणितसामर्थ्यस्येत्यर्थः ।

*सर्वधर्मवहिर्भूता इति* । सर्वधर्मपरित्यागपूर्वकं भगवच्छरणपरा इत्यर्थः । 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति, 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति च भगवदुक्तेरिति भावः । *सर्वतन्त्रेष्विति* । सर्वशास्त्रेष्वित्यर्थः ।

*गुह्यतरमिति* । अतिशयेन गुह्यमत एव गोपितमित्यर्थः । *अतन्द्रित इति* । आलस्यरहित इत्यर्थः । *मुक्तवन्ध इति* । छिन्नसंसारपाश इत्यर्थ । *परमिति* । परमात्मानमित्यर्थः । विष्णुना मस्तु जगन्नाथेत्याकारकनामसदृशमन्यन्नाम नास्तीत्याह—*नाम्नामिति* । गङ्गास्नानापेक्षया, काशीगमनापेक्षया च जगन्नाथेति नाम

न गङ्गास्नानमेतादृक् न काशीगमनं तथा ।
जगन्नाथेति संकीर्त्य नरः कैवल्यमाप्नुयात् ॥ ५०१ ॥

नारायणतन्त्रे—

ब्रह्महा स्वर्णहारी च सुरापेयी च यो नरः ।
नारायणेति संकीर्त्य मुच्यते नात्र संशयः ॥ ५०२ ॥

काश्यपपञ्चरात्रे नारदं प्रति भगवद्वाक्यम्—

ये गृह्णन्ति निरन्तरं मम पदं रामेति भक्तोत्तमाः
अन्तःसम्भृतहर्षजातपुलका जातप्रमोदाश्रवः ।
ते निःसार्य भवार्णवं सुतकलत्राद्यैस्तु नक्रैर्युतं
तृष्णावारि सुदुस्तरं मयि पुनः सायुज्यमायान्ति वै॥५०३॥

वामनभरद्वाजीये—

पृथिव्यां कति वा लोका न जाताः कति नो मृताः ।
मुक्तास्तत्र न सन्देहो ये हरेर्नामकीर्त्तकाः ॥ ५०४ ॥

वसिष्ठतन्त्रे—

हरिपूजापरो यस्तु हरिनामपरायणः ।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ ५०५ ॥

---

कीर्तनमेव श्रेष्ठं साक्षात्कैवल्यदायकत्वादित्याह—*जगदेति* । *निरन्तरम्*। सततमित्यर्थः । *अन्तःसम्भृतेति* । अभ्यन्तर उत्पन्नो यो हर्षस्तेनोत्पन्नरोमाञ्चा इत्यर्थः । *जातप्रेति* । प्रेम्णोत्पन्ना नेत्रजल-बिन्दवो येषां ते तथा । भवमर्णवेन रूपयति—*सुतकलत्रेति* । सुत-कलत्राद्येव नक्रा—यानुकजलजन्तवस्तैर्युक्तमिति, सुदुस्तरं तृष्णारू-पवारिणा तत्तुमशक्यमित्यर्थः । *मुक्ता इत्यादि*। 'तत्र' पदं हरिपदे-

तथा—

श्रीशब्दपूर्वं जयशब्दमध्यं
जयद्वयानन्तरतस्तथैव ।
त्रिःसप्तकृत्वो नरसिंहनाम
जपन्निहन्ति द्विजकोटिहत्याः ॥ ५०६ ॥

सकृदुच्चरितं नाम हरेर्नाम चिदात्मकम् ।
फलं नास्य क्षमो वक्तुं सहस्रवदनो विधिः ॥ ५०७ ॥

ग्रन्थान्तरे श्रीकृष्णः—

सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहु-
र्यो मां मुकुन्द नरसिंह जनार्दनेति ।
जीवञ्जपत्यनुदिनं मरणे रणे वा
पाषाणकाष्ठसदृशाय ददाम्यभीष्टम् ॥ ५०८ ॥

यन्नामकीर्तनादेव कृतार्था अप्यहो वयम् ।

---

नान्वेति । तव हरेर्नामकीर्तका मुक्ता इत्यत्र न सन्देह इति सम्बन्धः । *श्रीशब्दपूर्वमित्यादि* । श्री जय जय जय नरसिंहेत्याकारकद्वादशाक्षरो मन्त्रः । *त्रिः सप्तकृत्व इति* । एकविंशतिवारमित्यर्थः । *द्विजेति* । सम्बोधनविभक्त्यन्तम् । अथवा समासघटकम् । *चिदात्मकमिति* । चिद्रूपमित्यर्थः । नामनामिनोरभेदादित्यभिप्रायः । *सहस्रवदन इति* । शेष इत्यर्थः । *विधिरिति* । ब्रह्मेत्यर्थः । *ऊर्ध्वबाहुरिति* । प्रतिज्ञाकरणस्येयं मुद्रा । *पाषाणेति* । तत्तुल्यस्वरूपाय, चेतनारहितसदृशायापीत्यर्थः । *अभीष्टम्* । इच्छितं मोक्षादिकमित्यर्थः । *कृतार्था इति* । सम्पादितसम्पादितव्या इत्यर्थः ।

तस्मै शिवाय कृष्णाय भूयो भूयो नमाम्यहम् ॥५०६॥ इति ।

भगवन्नाममाहात्म्यग्रन्थानां संग्रहः कृतः ।
रघुनाथेन्द्रयतिना शिवस्य परितुष्टये ॥ १ ॥

---

*भगवन्नाममाहात्म्येति* । 'ऐश्वर्यस्य समग्रस्य शौर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ॥ इतिस्मृत्युक्तलक्षणलक्षितभगविशिष्टविष्णुशिवादीनाम् । नाम्नो नाम्नां मन्त्ररूपाणां तद्रहितानां वा श्रवणस्य, उच्चारणस्य, स्मरणस्य, कीर्तनस्य च,माहात्म्यस्य—फलादिदातृत्वस्य ग्रन्थानां-वचनानां सङ्ग्रहः-प्रकरणप्रदर्शनपुरःसरं ग्रहणमित्यर्थः । *शिवस्येति* । शङ्करस्य । *परितुष्टये* । सन्तोषायेत्यर्थः ।

रघुनाथेन्द्रयतिना सङ्गृहीतस्य शोधनम् ।
कृतं सटीकं ग्रन्थस्य बालानां बोधहेतवे ॥ १ ॥
काश्यामनन्तचिद्रुपा श्रीभैरवकृपावता ।
व्यापारेणानेन प्रीताः स्युर्गुरवो हृदयस्थिताः ॥ २ ॥

# अथ श्रीभगवन्नाममाहात्म्यसङ्ग्रहपरिशिष्टम् ।

अशेषपापनाशाय शक्तं नामैव केवलम् ।
यस्य तस्मै महेशाय भैरवाकृतये नमः ॥ १ ॥
नाममाहात्म्यग्रन्थानां संग्रहे ग्रहणं न हि ।
येषां संजातमधुना तद्ग्रहार्थं प्रयत्यते ॥ २ ॥

ऋग्वेदपरिशिष्टे—

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणाकर शङ्कर ॥ १ ॥
हर शम्भो महादेव विश्वेशामरवल्लभ ।
शिव शङ्कर सर्वात्मन्नीलकण्ठ नमोऽस्तु ते ॥ २ ॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय श्रीमहादेव ते नमः ॥ ३ ॥
एतानि शिवनामानि यः पठेन्नियतः सकृत् ।
नास्ति मृत्युभयं तस्य पापरोगादि किञ्चन ॥ ४ ॥

---

*विश्वेश्वरेति* । विश्वेषां सर्वेषामीश्वर इत्यर्थः । *पापरोगादीति* । पापं रोगश्चेत्यर्थः । अथवा पापाज्जातं रोगादीत्यर्थः । पापाद्रोगादि भवतीत्येतत्कर्मविपाके 'ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः' इत्यादिना प्रसिद्धम् । शिवनामवन्नारायण-

तथा—

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥५॥
कृष्णाय गोपीनाथाय चक्रिणे मुरवैरिणे ।
अमृतेशाय गोपाय गोविन्दाय नमो नमः ॥
एतान्यनन्तनामानि मण्डलान्ते सदा पठेत् ॥ ६ ॥

तथा—

वासनाद्वासुदेवोऽसि वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ ७ ॥
दशसप्त च नामानि मण्डलान्तेषु यः पठेत् ।
स शिवस्य पदं गत्वा शिवलोके महीयते ॥८॥ इति ।

नारायणोपनिषदि—

घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ।

---

णनामान्यपि मण्डलान्ते पठनीयानीत्याह—*यज्ञेशेति* । *मण्डलेति* । ऋग्वेददशविभागेषु प्रत्येकम् । वासुदेवशब्दव्युत्पत्तिमाह-*वासनादिति* । सर्वत्र प्रवेशादित्यर्थः । *ते* । त्वयेत्यर्थः । *सर्वभूतनिवास इति* । सर्वभूताश्रय इत्यर्थः । 'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः' इति पुराणप्रामाण्यादुभयोरैक्यप्रदर्शनार्थं वासुदेवादिनामोच्चारणेऽपि शिवलोक एव गच्छतीत्याह-*शिवस्य पदमिति* ।

*घृतस्य नामेति* । घृ क्षरणदीप्त्योरिति धातोरुत्पन्नो घृतशब्दः । घृतस्य दीप्तस्य स्वप्रकाशस्य ब्रह्मरूपशिवविष्ण्वादेर्यन्नाम शिव

वयं नाम प्रब्रवाम घृतेनास्मिन्यज्ञे धारयामा नमोभिः ॥९॥

( अनु० १२ )

रुद्रहृदयोपनिषदि—

श्रीरुद्ररुद्ररुद्रेति यस्तं ब्रूयाद्विचक्षणः ।

---

गोविन्देत्याकारकं गुह्यं सर्वतन्त्रेषु गोप्यमस्ति । तथा चागस्त्यसंहितायाम्—

सत्यं ब्रवीमि ते शम्भो गोपनीयमिदं मम ।

वैरिञ्चितन्त्रे—

पूजयस्व जगन्नाथं सर्वतन्त्रेषु गोपितम् ।

गुह्याद्गुह्य-तरं नाम कीर्तयस्व निरन्तरम् ॥ इति च ।

तेन शिवादिरूपेणोपांशुना ध्यानकाले शनैरुच्चार्यमाणेनामृतत्वमुत्पत्तिविनाशरहितं शिवादितत्वं, समानट् सम्यगानशे प्राप्नोतीत्यर्थः । तच्च शिवाख्यं नाम देवानां जिह्वा—देवैर्ध्यानपरैर्निरन्तरमुच्चार्यमाणत्वेन जिह्वेव सर्वदा मुखमध्ये वर्तते । किञ्चेदं शिवादिरूपं नामामृतस्य विनाशरहितस्य मोक्षस्य, नाभिः-रथचक्रस्य नाभिरिवाश्रयभूतम्, अनेन हि मुक्तिरूपं फलं प्राप्यते । उक्तञ्चादित्यपुराणे—

'सकृत्संस्मरणाच्छम्भोर्नश्यति क्लेशसञ्चयः ।

मुक्तिं प्रयाति स्वर्गोऽपि तस्य विघ्नोऽनुमीयते' ॥ इति ।

*वयं नामेति* । वयं ज्ञानार्थिनः पुरुषा अस्मिन् ज्ञानयज्ञे घृतेन दीप्तेन स्वप्रकाशेन ब्रह्मस्वरूपेण शिवादिना निमित्तभूतेन शिवादिरूपं नाम प्रब्रवाम—सर्वदा ध्यायन्त उच्चारयाम । ततो नमोभिः नमस्कारयुक्ता वयं चित्ते शिवादितत्वं सर्वदा धारयाम । ज्ञानस्य यज्ञत्वं भगवतोक्तं 'स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः' । इति ।

*रुद्रहृदयेति* । एषा च कृष्णयजुर्वेदान्तर्गतोपनिषत् । *यस्तमिति* । शिवमित्यर्थः । *विचक्षणः* । चतुरः । भक्तिमानिति फलि

कीर्तनात्सर्वदेवस्य सर्वपापैः प्रमुच्यते ॥१०॥ (म० १५-१६)

भस्मजाबालोपनिषदि—

तत्राहमासीनः काश्यां त्यक्तकुणपाञ्छैवानानीय स्वस्याङ्के संनिवेश्य भसितरुद्राक्षानुपस्पृश्य माभूदेतेषां जन्ममृतिश्चेति तारकं शैवं मनुमुपदिशामि। ततस्ते मुक्ता मामनुविशन्ति विज्ञानमयेनाङ्गेन। न पुनरावर्तन्ते हुताशनप्रतिष्ठं हविरिव। तत्रैव मुक्त्यर्थमुपदिश्यते शैवोऽयं मन्त्रः पञ्चाक्षरः ॥११॥ ( अ०२ख०२८ )

---

तोऽर्थः। *कीर्तनादिति*। सङ्ख्यागणनारहितादुच्चैरुच्चारणादित्यर्थः।

*भस्मजाबालेति*। एषापि कृष्णयजुर्वेदान्तर्गता। अत्र काश्यां मरणेऽपि शिवः शैवं तारकं पञ्चाक्षरं नामरूपमुपदिशति तत्प्रभावेण श्रावको विज्ञानमयेन शरीरेण शिवं प्रविशतीत्याह—*तत्राहमासीन इति*। अत्र यद्यपि 'काश्यां मरणान्मुक्तिः' इत्यादिश्रुतिप्रामाण्यात् काशीमरणमेव मुक्तिप्रयोजकमित्येवाभाति, तथापि विशेषतो विचारे काश्यामपि शैवनामरूपतारकमन्त्रोपदेशावश्यकतया मन्त्रोपदेशादिकमेव मुक्तौ मुख्यतरप्रयोजकमित्यवश्यं वक्तव्यतया स एव मन्त्रोपदेशः कारणमिति मन्तव्यम्। *तत्र* रत्नवेदिकायाम्। *त्यक्तकुणपानिति*। त्यक्तशरीरान्। *शैवान्*। शिवभक्तान्। *भसितेति*। भस्मेत्यर्थः। *तारकम्*। संसारार्णवादिति शेषः। अथवा सप्रणवम्। *शैवम्*। शिवनामात्मकम्। *मनुम्*। मन्त्रम्। *विज्ञानेति*। शिवस्य विज्ञानरूपत्वात्तेऽपि विज्ञानरूपा भवन्तीत्युचितमेव। *पञ्चाक्षर इति*। महादेवायेत्याकारकः। उक्तश्चात्रैव चतुर्थखण्डे-'ॐ इत्यग्रे व्याहरेत्। नम इति पश्चात्। ततो महादेवायेति पञ्चाक्षराणि। नातस्तारकः परमो मन्त्र इति। तारकोऽयं पञ्चाक्षर' इति।

हयग्रीवोपनिषदि—

हयग्रीवैकाक्षरजपशीलाज्ञया सूर्यादयः स्वतः स्वस्वकर्मणि प्रवर्तन्ते । सर्वेषां बीजानां हयग्रीवैकाक्षरबीजमनुत्तमं मन्त्रराजात्मकं भवति ॥१२॥ ( ख० १ )

मुक्तिकोपनिषदि—

केचित्त्वन्नामभजनात्काश्यां तारोपदेशतः
सालोक्यादिविभागेन चतुर्धामुक्तिरीरिताः ॥१३॥
दुराचाररतो वापि मन्नामभजनात्कपे ।
सालोक्यमुक्तिमाप्नोति न तु लोकान्तरादिकम् ॥ १४ ॥
(म० १६-१८)

---

*हयग्रीवोपनिषदीति* । एषाऽथर्ववेदान्तर्गतोपनिषद् । *एकाक्षरेति*। 'ह्सौं' इत्याकारकम् । उक्तञ्चास्मात्पूर्वम्-'हकारोंसकारो-मकारों त्रयमेकस्वरूपं भवति । ह्सौं बीजाक्षरं भवति इति । अस्य जपस्य प्रभावमाह-*सूर्यादय इत्यादि* । एतद्बीजं मन्त्ररूपमित्याह-*मन्त्रराजात्मकमिति* । नन्वत्र नाममाहात्म्यप्रस्तावे कथं बीजमन्त्रस्य ग्रहणमितिचेदयं बीजमन्त्रोऽपि हयग्रीवस्वरूप एव । उक्तञ्च-'ह्सौं हयग्रीवस्वरूपो भवति' इति । एवं च अस्य हयग्रीवरूपनामिरूपत्वेन नामरूपत्वं सुतरामायात्येव नामनामिनोरभेदात् । वस्तुतस्तु बीजात्मकानि सर्वाण्यपि वर्णरूपाणि तत्तद्देवतानामान्येवेति बोध्यम् ।

*मुक्तिकोपनिषदीति*। एषा शुक्लयजुर्वेदान्तर्गतोपनिषद् राममारुतिसंवादरूपा ।*केचित्त्वन्नामेति*। रामनामेत्यर्थः। *तारोपदेशत इति*। ॐ काररूपमन्त्रोपदेशत इत्यर्थः । *चतुर्धेति* । सालोक्यसार्ष्टिसामीप्यसायुज्यरूपेत्यर्थः । *लोकान्तरादिकमिति* । स्वर्गादिकमित्यर्थः ।

त्रिपुरातापिन्युपनिषदि—

ॐ नमः शिवायेति याजुषमन्त्रोपासको रुद्रत्वं प्राप्नोति । कल्याणं प्राप्नोति ॥ १५ ॥ ( अ०४ )

भारते विष्णुसहस्रनाम्नि—

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१६॥
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किञ्चित्सोऽमुत्रेह च मानवः ॥१७॥
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।

---

*त्रिपुरेति* । एषाथर्ववेदान्तर्गतोपनिषद् । *याजुषेति* । 'नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च' इति।नमःसोमायचेत्यादिरुद्रखण्डे तैत्तिरीयशाखीये प्रसिद्धः ।

श्रीभगवन्नाममाहात्म्यप्रस्तावप्रसङ्गे यथैकनाममाहात्म्यबोधकवचनानां संकलनं तथा नामसमुदायमाहात्म्यबोधकानामपि सङ्ग्रहण मावश्यकम् । प्रकृतग्रन्थकारेणापि 'अगस्त्यसंहितायां हालास्यमाहात्म्ये—महादेवो महेशश्च' इत्यादिना ( पृ० १५२ ) नामसमुदायमाहात्म्यबोधकवचनानां संग्रहणं कृतं, तथा 'भाष्यकारैश्च सहस्रनाम भाष्ये' (पृ०८ ) इत्यादिना, 'भक्तिमान् यः' ( पृ०३१ ) इत्यादिविष्णु सहस्रनामस्थवचनादिप्रदर्शनेन च स्पष्टं सूचितमिति तद्दृष्ट्वा शिववासुदेवाद्येकनाममाहात्म्यबोधकवचनग्रहणमनेकसमुदितनाममाहात्म्यबोधकवचनग्रहणस्याप्युपलक्षणमिति मनसि कृत्वाऽऽह—*भारते विष्णुसहस्रनाम्नीति* । *कीर्तनीयस्य* । कीर्तयितुं योग्यस्य । *दिव्यानामिति* । अलौकिकानां विलक्षणफलदातॄणामिति यावत् । *अमुत्रेति* । स्वर्गे, तत्राशुभं परो-

वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥१८॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥१९॥
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ २० ॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥२१॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ २२ ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥२३॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ २४ ॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ २५ ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ २६ ॥

त्कृष्टसम्पत्त्यासादनादिकम् । *ज्ञातिप्राधान्यमिति* । स्वजातीयवर्गेषु मुख्यत्वमित्यर्थः । *अचलामिति* । अखण्डितामित्यर्थः । नामसमुदायजपो रोगादिनाशकोऽप्यस्तीत्याह—*रोगार्त इति* । सनातनं ब्रह्म यातुर्योग्यतायाः परिचायकमाह-*भक्तेत्यादि* ।

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ २७ ॥
यो नरः पठते नित्यं त्रिकालं केशवालये ।
द्विकालमेककालं वा क्रूरं सर्वं व्यपोहति ॥ २८ ॥
दह्यन्ते रिपवस्तस्य सौम्याः सर्वे सदा गृहाः ।
विलीयन्ते च पापानि स्तवे ह्यस्मिन् प्रकीर्तिते ॥ २९ ॥
येन ध्यातः श्रुतो येन येनायं पठ्यते स्तवः ।
दत्तानि सर्वदानानि सुराः सर्वे समर्चिताः ॥ ३० ॥
इह लोके परे वापि न भयं विद्यते क्वचित् ।
नाम्नां सहस्रं योऽधीते द्वादश्यां मम सन्निधौ ॥ ३१ ॥
शनैर्दहति पापानि कल्पकोटिशतानि च ।
अश्वत्थसन्निधौ पार्थ तुलसीसन्निधौ तथा ॥ ३२ ॥
पठन्नामसहस्रं तु गवां कोटिफलं लभेत् ।
शिवालये पठेन्नित्यं तुलसीवनसंस्थितः ॥ ३३ ॥
नरो मुक्तिमवाप्नोति चक्रपाणेर्वचो यथा ।
ब्रह्महत्यादिकं घोरं सर्वपापं विनश्यति ॥ ३४ ॥

अनुस्मृतौ—

नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम् ।

---

सहस्रनामजप एव दानादिसर्वकर्मफलदायक इत्याह—#दत्तानि सर्वदानानीति# । एवं शिवादिसहस्रनामस्थवचनानि बोद्धयानि ।

नमो नारायणायेति मन्त्रस्य केवलं जपाद्वैकुण्ठलोकं गच्छतीत्याह #नमो नारायणायेति# । आचारभक्तिश्रद्धादिविशेषणान् । सर्व-

अन्तकाले जपन्यान्ति तद्विष्णोः परमं पदम् ॥ ३५ ॥

आचारहीनोऽपि मुनिप्रवीर
भक्त्या विहीनोऽपि विनिन्दितोऽपि ।
किं तस्य नारायणशब्दमात्रतो
विमुक्तपापो विशतेऽच्युतां गतिम् ॥ ३६ ॥

भारतविभागे—

कृष्णः कृष्णः कृष्ण इत्यन्तकाले
जपञ्जन्तुर्जीवितं यो जहाति ।
आद्यः शब्दः कल्पते तस्य मुक्तौ
व्रीडानम्रो वर्तते तद्द्वयेन ॥ ३७ ॥

पाण्डवगीतायाम्—

मनसा कर्मणा वाचा ये स्मरन्ति जनार्दनम् ।
तत्र तत्र कुरुक्षेत्रं प्रयोगो नैमिषं वनम् ॥ ३८ ॥

---

ञोपलब्धानां नामजपेऽत्यन्तावश्यकता नास्तीत्याह—*आचारहीनोऽपीति* । अच्युतप्रवेशे योग्यं विशेषणमाह—*विमुक्तपाप इति* ।

*अन्तकाले* । मरणकाले । *जन्तुरिति* । नामोच्चारणसमर्थः प्राणिमात्रोऽत्राधिकारीति सूचितम् । *आद्य इति* । कृष्णेत्याकारकशब्दत्रयमध्य इत्यर्थः । *व्रीडानम्रः* । लज्जयावनतमुखः । *तद्द्वयेनेति* । उर्वरितकृष्णनामद्वयेनेत्यर्थः । एकेन नामोच्चारणेनैव सर्वप्राप्तव्यस्य सिद्धेरपरनामद्वयं वृथेति धियेत्यभिप्रायः ।

*मनसेत्यादि* । ननु वाचा जनार्दनस्मरणं नामोच्चारणेन स्मरणस्य जातत्वात्कथंचित्सम्भवति । परन्तु कर्मणा कथं जनार्दनस्मर-

श्रीमद्भागवते—

नैवंविधः पुरुषकारमुरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूरविगतः सकृदाददीत
यन्नामधेयमधुना स जहाति बन्धम् ॥३६॥(५-२-३५

अथ कथञ्चित्स्खलनक्षुत्पतनजृम्भणादुरवस्थानादिषु विवशानां नः स्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव

---

णमिति चेत्, कर्मणेत्येतत्स्मरणक्रियायां न स्वतन्त्रं करणं किन्तु यदा कर्मणा वाचा च मनुजो युक्तो भवति तदा मनसा जनार्दन-स्मरणं करणीयमितियोजनेऽदोषः। इन्द्रियाणि तानि तानि कर्माणि कुर्वन्तु मनस्तु तत्तदिन्द्रियकर्मकरणे जनार्दनमेव स्मरत्विति यावत्।

इतिहासीयवचनप्रदर्शनानन्तरं पुराणीयवचनप्रदर्शयितुमाह—*श्रीमद्भागवत इति*। अहो आश्चर्यं राज्ञः सामर्थ्यमिति परीक्षिदभिप्रायज्ञो भगवान् बादरायणिराह—*नैवमिति*।*जितषड्गुणानामिति*। जिताः षड्गुणाः—इन्द्रियाणि षडूर्मयो वा यैस्तेषामेवंविधःपुरुषकार इति न चित्रं—नासम्भावितं, यतो विदूरविगतोऽन्त्यजोऽपि यस्योरुक्रमस्य नाम सकृदुच्चारयेद्यः स एतज्जन्मनि तत्क्षणमेव बन्धं—संसार, जहाति—शुद्धो भवतीत्यर्थः।

मेरुदेव्या सह भगवन्तं यजनकर्तुर्नाभेर्यज्ञे प्रादुर्भूतं परमात्मानमृत्विज आहुः। *अथेति*। स्खलनं—कर्मणि वैपरीत्यकरणम्। क्षुत्—क्षुधा। दुरवस्थान—दुःखकारकावस्थासु गमनम्। *विवशानामिति*। स्मर्तुमशक्तानाम्। *सकलेति*। सम्पूर्णपापनाशनानीत्यर्थः।

गुणकृतनामधेयानि वचनगोचराणि भवन्तु ॥४०॥ (५-३-१२)

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।

यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥४१॥ (६-२-७)

स्कन्दपुराणे वैष्णवखण्डे कार्तिकमाहात्म्ये—

नामस्मरणमाहात्म्यं मत्स्यं वक्तुं न शक्यते ।

पुष्करेण यथा पूर्वं नारकीयाश्च मोचिताः ॥ ४२ ॥ (२-२४)

तत्र केदारखण्डे प्रह्लादवचनम्—

राम नाम जपतां कुतो भयं

---

*गुणकृतानि* । गुणैरागतानि नामानि तु 'गौणानि तत्र नामानि कर्मजानिकानिचित्' इत्युपक्रम्य 'नराणामयनं ख्यातमहमेकः सनातनः' इत्यादिना भारते शान्तिपर्वणि नारायणपृश्निगर्भप्रभृतीनि प्रसिद्धानि । *वचनगोचराणीति* । मुखे प्रादुर्भवन्त्वित्यर्थः ।

नन्वस्य दण्डयस्य पापिनो रक्षणार्थं किमर्थं प्रयत्यत इति यमदूतसम्भाव्यमानां शङ्कां मनसि निधाय विष्णुदूता ऊचुः—*अयं हीति* । यद्यस्माद्विवशोऽपि हरेर्नाम व्याजहारोच्चारितवान् । न केवलं प्रायश्चित्तमात्रं हरेर्नामापि तु स्वस्त्ययनं-मोक्षसाधनमपि । 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति'॥ इतिस्मृतेः ।

*पुष्करेणेति* । अयमत्र प्रकरणसन्दर्भः—नन्दिग्रामे पुष्करनामकौ द्वौ ब्राह्मणौ वसतः स्म । तयोर्मध्य एकः पापी, अन्यः पुण्यकर्मा । अज्ञानतो यमदूतैः पापिपुष्करस्थाने सुकृतिपुष्करनयनं कृतम् । तत्र च यमेनैनं दृष्ट्वा स्वदूतदोषं ज्ञात्वा सन्मानितस्यास्येच्छया नरकस्तत्रस्याजनाश्च दर्शिताः, तद्दृष्ट्वा दयावतानेन गोविन्द गोविन्द इत्यादिनामोच्चारितम्, तच्छ्रुत्वा सर्वे नारकिणो नरकान् त्यक्त्वा वैकुण्ठलोकं गता इति ।

सर्वतापशमनैकभैषजम् ।

पश्य तात मम गात्रसन्निधौ

पावकोऽपि सलिलायतेऽधुना ॥ ४३ ॥

गरुडपुराणे—

पापानलस्य दीप्तस्य मा कुर्वन्तु भयं नराः ।

गोविन्दनाममेघौघैर्नश्यते नीरबिन्दुभिः ॥ ४४ ॥

तथा तत्रैवाम्बरीषं प्रति शौनकवाक्यम्—

स्वर्णस्तेयादिकं पापमपेयापानसम्भवम् ।

तत्पापं विलयं याति कृते गोविन्दकीर्तने ॥ ४५ ॥

पद्मपुराणे—

न तत्पुराणं नहि यत्र रामो

यस्यां न रामो न च संहिता सा ।

स नेतिहासो न हि यत्र रामः

काव्यं न तत्स्यान्न हि यत्र रामः ॥ ४६ ॥

---

*सर्वतापेति* । तापनाशकेषु सर्वेषु मुख्यमौषधवत्कार्यकरम् । *सलिलायत इति* । सलिलवदाचरतीत्यर्थः ।

*पापानलस्येति* । पापरूपाग्नेः । *गोविन्दनामेति* । गोविन्देत्याकारकनामरूपमेघानामोघैः—समुदायैः । *नीरबिन्दुभिरिति* । जलयुक्तैरित्यर्थः, एतन्मेघौघविशेषणम् ।

यत्र रामनाम नास्ति तत्पुराणादिकं सदपि पुराणादिकं न भवतीत्याह—*न तत्पुराणेति* । रामेत्युपलक्षणं मुक्त्यादिदायकसम्पूर्णानां भगवन्नाम्नाम् । अन्यथा रामनामरहितपुराणगतान्यदेवनाममाहात्म्य-

तत्रैव रामरक्षास्तोत्रे—

रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ॥४७॥
जगज्जैत्रैकमन्त्रेण रामनाम्नाभिरक्षितम् ।
यः कण्ठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ॥ ४८ ॥
भर्जनं भववीजानामर्जनं सुखसम्पदाम् ।
तर्जनं यमदूतानां रामरामेति गर्जनम् ॥ ४९ ॥
रामरामेति रामेति रमे रामे मनोरमे ।
सहस्रनामतत्तुल्यं रामनाम वरानने ॥५०॥ ( अ० ७४ )

---

ध्यनव्यर्थतापत्ते. ।

*रामेतीति* । अत्र इतिशब्दाः प्रकारवचनाः । राममितिशेषः । मित्यप्रकारिकया वा स्मृत्या, रामभद्रप्रकारिकया वा स्मृत्या रामचन्द्रप्रकारिकया वा स्मृत्या रामं विषयीकुर्वन् नरः पापैर्न लिप्यते । पापालेपे च भुक्तिर्वामुक्तिर्वा वाञ्छिता भवतीत्यर्थः ।

*जगदिति* । पूर्वोक्तेषु त्रिषु नामसु मध्ये जगद्विजयसाधनमन्त्रेण रामेत्याकारकेण, अभिरक्षितं-कृतोज्जीवनमेतत्स्तोत्रं यः कण्ठे धारयेत्-पठेत् तस्य सर्वाः सिद्धयः करस्था भवन्त्येतादृशं रामनाममाहात्म्यम् ।

*भर्जनमिति* । भवबीजानां-संसारकारणानेकप्रकारकाज्ञानानां, भर्जनं नाशकं, सुखसम्पदां सुखस्य सम्पत्तेश्च,। अर्जनं-प्रापकं, तर्जनं-भर्त्सनं, रामरामेति गर्जनम्-महताशब्देनोच्चारणम्। *रमे* । क्रीडामि । *मनोरमे* । पार्वतीसम्बोधनम् । अथवा 'रामे' इति सप्तम्यन्तपदार्थविशेषणम् । *सहस्रनामेति* । एकं रामनामान्यदेवतासहस्रनामतुल्यमित्यर्थः।। *वरानने* । पार्वतीसम्बोधनम् ।

तथा तत्रैव—

यत्र तत्र स्थितो वापि कृष्णकृष्णेति कीर्तयेत् ।
स पूतो नात्र सन्देहो महापातकसङ्कटात् ॥ ५१ ॥

विष्णुपुराणे—

अविकारी विकारी वा सर्वदोषैकभाजनः ।
परमेशपदं याति रामनामानुकीर्तनात् ॥ ५२ ॥

नरसिंहपुराणे—

शृणुष्वावहितो ब्रह्मन् गुह्यनामानि मेऽधुना ।
कोकामुखे तु वाराहं मन्दरे मधुसूदनम् ॥५३॥ इत्यादीनि।
एतानि मम नामानि सरहस्यानि प्रजापते ।
यः पठेत्प्रातरुत्थाय शृणुयाद्वापि नित्यशः ॥५४॥
गवां शतसहस्रस्य दत्तस्य फलमाप्नुयात् ।
दिने दिने शुचिर्भूत्वा नामान्येतानि यः पठेत् ॥५५॥
दुःस्वप्नं न भवेत्तस्य मत्प्रसादान्न संशयः ।
अष्टषष्टिं तु नामानि त्रिकालं यः पठेन्नरः ॥

---

*अविकारीति* । रोगरहितः । *विकारी* । रोगयुतः । *सर्वदोषैकेति* । ब्रह्महत्यादिसकलपापयुतोऽपीत्यर्थः ।

ब्रह्मदेवप्रश्नानन्तरं हरिः कथयति । *ब्रह्मनिति* । *आवहित इति* । स्थिरचित्तः ।

*गुह्यनामानीति* । अत्यन्तगोपितत्वादप्रकाशितानि । *सरहस्यानीति* । गुढवेद्ययुतानि ।

विमुक्तः सर्वपापेभ्यो मम लोके स मोदते ॥ ५६ ॥
( अ० ६५ श्लो० २५–२८ )

विष्णुधर्मोत्तरे प्रह्लादवाक्यम्—

ऋग्वेदोऽथ यजुर्वेदः सामवेदस्त्वथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ ५७ ॥

अध्यात्मरामायणे—

इत्युक्त्वा प्रययौ सोऽपि विमानेनार्कवर्चसा ।
विष्णोः पदं रामनामस्मरणे फलमीदृशम् ॥ ५८ ॥
( अर०स० १० श्लो० ३ )

यन्नाम विवशो गृह्णन् म्रियमाणः परं पदम् ।
याति साक्षात्स एवाद्य मुमूर्षोर्मे पुरः स्थितः ॥५९॥
( किष्कि०स० २ श्लो० ६७ )

हनुमानपि तं प्राह नत्वा रामं प्रहृष्टधीः ।
त्वन्नाम स्मरतो राम न तृप्यति मनो मम ॥ ६० ॥
यावत्स्थास्यति ते नाम लोके तावत्कलेवरम् ।
मम तिष्ठतु राजेन्द्र वरोऽयं मेऽभिकाङ्क्षितः ॥ ६१ ॥
( युद्धका० स० १६ श्लो० १२–१३ )

---

*सोऽपीति* । गन्धर्वरूपः कबन्धः । *अर्कवर्चसेति* । सूर्यतेजसा । *विष्णोः पदमिति* । वैकुण्ठलोकमित्यर्थः । *ईदृशमिति* । वैकुण्ठलोकगमनरूपम् । एवं महेश्वरः पार्वतीं प्रति कथितवान् । *विवश इति* । विकलेन्द्रिय इत्यर्थः । *मे* । वालिनः । *प्रहृष्टधीरिति* । सानन्दबुद्धिरित्यर्थः । *कलेवरमिति* । शरीरम् । *अ-

लोकान्मदीयोपरिदीप्यमानान्
स्त्वद्भावयुक्ताः कृतपुण्यपुञ्जाः ।
ये चापि ते राम पवित्रनाम
गृणन्ति मर्त्या लयकाल एव ॥ ६२ ॥
( उत्तरका० स० ६ श्लो० ६३ )

शाण्डिल्यसंहितायां लीलाशतनामस्तोत्रे—

श्रीकृष्णेति महामन्त्रं श्रीकृष्णेति महौषधीम् ।
ये भजन्ति महाभागास्तेषां किं किं न सिद्ध्यति ॥ ६३ ॥
( अं० १ अ० २ श्लो० ४२ )

यस्य नाम्नः प्रभावेण पीतं हालाहलं विषम् ।
कपालं गलितं शम्भोस्ततः कोऽन्यः परो हरेः ॥ ६४ ॥
( अं० ३ अ० २ श्लो० २० )

---

भिकाङ्क्षित इति* । प्रार्थित इत्यर्थः । *लोकानिति* । रामवचनानन्तरं ब्रह्मणो वचनमिदम्। *मदीयोपरीति*। ममायं मदीयस्तस्योपरि मदीयोपरि, ब्रह्मलोकानामुपरिवर्तमानानिति यावत् । *त्वद्भावयुक्ता इति* । त्वद्भक्ता इत्यर्थः । *कृतपुण्यपुञ्जा इति* । सम्पादितसुकृतसमुदायाः । *पवित्रनामेति* । पविर्वज्रं भयरूपं 'महद्भयं वज्रमुद्यतम्' इति श्रुतेः तस्मात्त्रायत इति भयरूपवज्राद्रक्षकमित्यर्थः । *लयकाल इति* । मरणकाल इत्यर्थः ।

श्रीकृष्णनामजपात्सर्वमपि सिध्यति यतस्तन्नाम महामन्त्ररूपमौषधीरूपं चेत्याह—*श्रीकृष्णेत्यादि* । श्रीकृष्णजपो महाफलदायक इति सत्यमेव नत्वर्थवाद इत्यस्मिन्नर्थे दृष्टान्तं प्रदर्शयति—*यस्येत्यादि* । *कपालमिति* । भैरवरूपशिवावतारे शिवनिन्दापरस्य

यन्नामधेयमखिलाघचयं निहन्ति ।
लोके कथञ्चिदपि संस्मरणे प्रयुक्तम् ॥ ६५ ॥
( अं० ३ अ० ६ श्लो० ६८ )

ब्रह्मरहस्ये कर्णध्वजं प्रति ब्रह्मवाक्यम्—

तथ्यं ब्रवीमि ते राजन् श्रुत्वैतदवधारय ।
नामसंकीर्तनादन्यन्मोचकोऽत्र न विद्यते ॥ ६६ ॥

सात्वततन्त्रे—

यद्यशक्तो भवेत् कीर्तौ स्मरणे चापि सर्वशः ।
तदा तु भगवन्नाम्नामावृत्तो (त्ति)वृत्त(वर)येत्सदा ॥६७॥
सदा शश्वत् प्रीतियुक्तो यः कुर्यादेतदन्वहम् ।
तस्याशु भक्तिः श्रीकृष्णे जायते सद्भिरादृता॥ ६८ ॥
( प० ४ श्लो० ३६ )

तेषामेकविधं प्रोक्तमञ्जसा मुक्तिकारणम् ।

---

ब्रह्मणश्छिन्नं हस्तलग्नं पञ्चमं मुखमित्यर्थः । *अखिलाघचयमिति* । सम्पूर्णपातकसमुदायमित्यर्थः । *कथञ्चिदपीति* । श्रद्धादिना तद्रहितेन चेत्यर्थः ।

*सात्वतन्त्र इति* । एतच्च शिवेन नारदायोपदिष्टम् । *कीर्ताविति* । कीर्तन इत्यर्थः । *स्मरण इति* । नामोच्चारणरहितस्मरण इत्यर्थः । *वरयेदिति* । प्रार्थयेदित्यर्थः । श्रीभगवन्नामावृत्तिफलमाह—*भक्तिरिति* । सर्वसाधनेषु मुक्तिकारणं कृष्णनामानुकीर्तनमेव मुख्यमित्याह—*तेषामिति* । कृतादिषु ध्यानादिसाधनैर्यत्फलं

सर्वसौख्यकरं चापि कृष्णनामानुकीर्तनम् ॥ ६९ ॥

( प० ५ श्लो० ३७ )

ध्यानेनेष्ट्या पूजनेन यत्फलं लभ्यते जनैः ।
कृतादिषु कलौ तद्वै कीर्तनादिषु लभ्यते ॥ ७० ॥
न देशकालकर्तृणां नियमः कीर्तने स्मृतः ।
तस्मात् कलौ परो धर्मो हरिकीर्तेः सुकीर्तनम् ॥ ७१ ॥
यतः कलिं प्रशंसन्ति शिष्टास्त्रियुगवर्तिनः ।
यत्र कीर्तनमात्रेण प्राप्नोति परमं पदम् ॥ ७२ ॥
कृतादावपि ये जीवा न मुक्ता निजधर्मतः ।
तेऽपि मुक्तिं प्रयास्यन्ति कलौ कीर्तनमात्रतः ॥ ७३ ॥
कलेर्दोषसमुद्रस्य गुण एको महान् यतः ।
नाम्नां संकीर्तनेनैव चातुर्वर्ग्यं जनोऽश्नुते ॥ ७४ ॥
कृतादिष्वपि विप्रेन्द्र हरिनामानुकीर्तनम् ।
तपादिसाध्यं तद्भूयः कलावुभयतां गतम् ॥ ७५ ॥
तस्मात् कलियुगे विष्णोर्नामकीर्तनमुत्तमम् ।

---

लभ्यते तत्कलौ हरिकीर्तनादेव सम्पद्यत इत्याह—*ध्यानेत्यादि* । देशकालादिनियमाभावमाह—*न देशेति* । लघूपायेन महत्फलदायकत्वेन कलेः प्राशस्त्यमाह—*यत इति* । सर्वयुगीयालब्धमुक्तिजीवमुक्तिकारकः कलिरित्याह—*कृतेति* । *तपादिसाध्यमिति* । इदमाकूतमत्र—मुक्तिसाधन हरिनामानुकीर्तनमेव । कृतादिष्वपि तपआदिभिस्तदेव सिद्धं सम्मुक्तिप्रयोजकं भवति, कलौ तु तपआदिकर्तुमशक्यतया तन्नामानुकीर्तनमेव तपआदिरूपं हरिकीर्त-

साधनं भक्तिनिष्ठानां साध्यं चैव प्रकीर्तितम् ॥ ७६ ॥
येन केनापि भावेन कीर्तयन् सततं हरिम् ।
हित्वा पापं गतिं यान्ति किमुतच्छ्रद्धया गृणन् ॥७७॥
कलौ नामपरा एव सततं द्विजसत्तम ।
भक्ता महाभागवता भगवत्प्रियकारिणः ॥ ७८ ॥
तस्मात्सर्वात्मना विप्र कुरु श्रीकृष्णकीर्तनम् ।
श्रद्धया सततं युक्त एतदेव महाफलम् ॥ ७९ ॥

( पा० ५ श्लो० ४३–५२ )

यदि सर्वं न शक्नोपि प्रत्यहं पठितुं द्विज ।
तदा कृष्णेति कृष्णेति कृष्णेति प्रत्यहं वद ॥ ८० ॥
एतेन तव विप्रर्षे सर्वं सम्पद्यतेऽसकृत ।
किं पुनर्भगवन्नाम्नां सहस्रस्य प्रकीर्तनात् ॥ ८१ ॥
यन्नामकीर्तनेनैव पुमान्संसारसागरम् ।
तरत्यद्धा प्रपद्ये तं कृष्णं गोपालरूपिणम् ॥ ८२ ॥

( पा० ६ श्लो० २२३–२२५ )

---

नरूपं च सम्पन्नं सन्मुक्तिदायकं भवतीति । *साध्यमिति* । यत्सा-धनरूपं कीर्तनं तद्भक्तिप्रवणानां साध्यरूपं च भवति । दृश्यते चैत-न्नारदादीनां भक्तानां चरिते । *भावेनेति* । हरिकीर्तनं येन केनापि भावेन-द्रव्यादेरप्यभिप्रायेणेत्यर्थः । *द्विजसत्तम* । ब्राह्मणश्रेष्ठ नारद । *महाभागवता इति* । एतदेव भागवतानां महत्वं यन्नाम-परत्वमिति । *श्रद्धयेति* । एतत्पदं युक्त इत्यनेनान्वेति । *महा-फलमिति* । फलान्तराकारणत्वादिति शेषः । *प्रपद्य इति* ।

शृण्वन्ति प्रत्यहं ये वै विष्णोर्नामसहस्रकम् ।
कीर्तयन्त्यथवा विप्र संस्मरन्त्यादरेण वा ॥ ८३ ॥
शतं वा विंशतिं वापि दश वा पञ्च वा द्विज ।
एकं वा कामतो भक्त्या विष्णुपादाम्बुजाश्रयाः ॥८४॥
तेषां फलस्य पुण्यानां नान्तं पश्यामि नारद ।
यतस्तैर्भगवानेव परानन्दो वशीकृतः ॥ ८५ ॥
यतो नामैव परमं तीर्थं क्षेत्रं च पुण्यदम् ।
नामैव परमं दैवं नामैव परमं तपः ॥ ८६ ॥
नामैव परमं दानं नामैव परमा क्रिया ।
नामैव परमो धर्मो नामैवार्थः प्रकीर्तितः ॥ ८७ ॥
नामैव कामो भक्तानां मोक्षोऽपि नाम केवलम् ।
एषां च साधनं नाम कामिनां द्विजसत्तम ॥ ८८ ॥
नामैव परमा भक्तिर्नामैव परमा गतिः ।
नामैव परमं जाप्यं नामैव प्रार्थनं परम् ॥ ८९ ॥
निष्कामानां धनं नाम मुक्तिभुक्तिसुखार्थवत् ।
नाम स्यात्परमं सौख्यं नाम वैराग्यकारणम् ॥ ९० ॥

---

प्राप्नोमि-भक्तो भवामीति यावत् ।

*शतं वेति* । कृष्णसहस्रनामसु नाम्नां शतादिकं वाशक्तेन जप्तव्यमथवैकं वेति । *वशीकृतः । आधिनीकृतः । तीर्थाद्युत्तमसर्वपदार्थेषु श्रीकृष्णनामैवैकं मुख्य नान्यत्किञ्चिदपीत्याह— *यतो नामैवेति* । भक्ता नामातिरिक्तं न किमपीच्छन्तीत्याह—*नामैवेति* । यया कयाचिद्रीत्या मुखान्निर्गतं नाम सर्वं-

सत्वशुद्धिकरं नाम नामज्ञानप्रदं स्मृतम् ।
मुमुक्षूणां मुक्तिप्रदं कामिनां सर्वकामदम् ॥ ६१ ॥
वैष्णवानां फलं नाम तस्मान्नाम सदा स्मरेत् ।
सङ्केतितात्पारिहास्याद्धेलनाज्ज्वरतापतः ॥ ६२ ॥
कीर्तितं भगवन्नाम सर्वपापहरं स्मृतम् ।
यावती पापनिर्हारे शक्तिर्नाम्नि हरेः स्थिता ॥ ६३ ॥
तावत्पापिजनः पापं कर्तुं शक्नोति नैव हि ।
ज्ञानाज्ञानाद्धरेर्नाम कीर्तनात्पुरुषस्य हि ॥ ६४ ॥
पापराशिं दहत्याशु यथा तूलं विभावसुः ।
संकीर्तितं हरेर्नाम श्रद्धया पुरुषेण वै ॥ ६५ ॥
तस्य सत्यफलं धत्ते क्रमशो द्विजसत्तम ।
पापनाशं महापुण्यं वैराग्यं च चतुर्विधम् ॥ ६६ ॥
गुरुसेवामात्मबोधं भ्रान्तिनाशमनन्तरम् ।
संपूर्णानन्दबोधं च ततस्तस्मिन् लभेत्स्थिरम् ॥ ६७ ॥
( प० ७ श्लो० १–१५ )

एष नामपरश्चाशु जायते द्विजसत्तम ।
ज्ञानं च परमं शुद्धं ब्रह्मानन्दप्रदायकम् ॥ ९८ ॥

---

पातकनाशकं भवतीत्याह—*सङ्केतितादिति* । *तूलमिति* । कार्पासम् । *विभावसुरिति* । अग्निरित्यर्थः । 'विभावसुः पुमान् सूर्ये हरिभेदे च पावके' इति मेदिनी । *सत्यफलमिति* । अनेन नाम्नां सर्वाण्यपि फलानि सत्यानि न प्ररोचनार्थानीति बोधितम् । *क्रमश इति* । पापनाशमित्यादिना क्रम एव प्रदर्श्यते । तीर्थयात्रा-

तीर्थैर्दानैस्तपोभिश्च होमैर्जाप्यैर्व्रतैर्मखैः ।
योगैश्च विविधैर्विप्र यद्विष्णोः परमं पदम् ॥ ९९ ॥
न यान्ति मानवास्तद्वै नामकीर्तनमात्रतः ।
संयान्त्येव न सन्देहं कुरु विप्र हरिप्रियम् ॥ १०० ॥
महापातकयुक्तोऽपि कीर्तयित्वा जगद्गुरुम् ।
तरत्येव न सन्देहः सत्यमेव वदाम्यहम् ॥ १०१ ॥
कलिकालमलं चापि सर्वपातकमेव च ।
हित्वा नामपरो विप्र विष्णुलोकं स गच्छति ॥
तस्मान्नामैकमात्रेण तरत्येव भवार्णवम् ॥ १०२ ॥
( प० ७ श्लो० २१–२६ )

जगन्नाथेति ते नाम व्याहरिष्यन्ति ते यदि ।
अपराधशतं तेषां क्षमते नात्र संशयः ॥ १०३ ॥
( प० ७ श्लो० ४५ )

सर्वापराधांस्तरति विष्णुपादाम्बुजाश्रयः ।
विष्णोरप्यपराधान्वै नामसङ्कीर्तनात्तरेत् ॥ १०४ ॥
( प० ७ श्लो० ४७ )

---

दिभिर्विष्णोः परमपदप्राप्तिर्न भवति, परन्तु नामकीर्तनमात्रेणैव भवतीत्याह—*तीर्थैरिति* । *हरिप्रियमिति* । नामेति शेषः ।

*जगद्गुरुम्* । श्रीकृष्णम् । *अहमिति* । शिव इत्यर्थः । संसारसागरतरणे कलौ नामैव साधनमित्याह—*तस्मादिति* । *ते* तव । *ते* । भक्ताः । *सर्वेति* । अन्यदेवताब्राह्मणाद्यपराधाद्विष्णुपादाश्रयणेन तरति । प्रसिद्धं त्वेतदम्बरीषदूर्वासस्कथायाम् । विष्णोर-

यन्नामैकं कर्णमूलं प्रविष्टं
वाचान्विष्टं चेतनासु स्मृतं वा ।
दग्ध्वा पापं शुद्धसत्वात्तदेहं
कृत्वा साक्षात्संविधत्तेऽनवद्यम् ॥ १०५ ॥

( प० ९ श्लो० ५८ )

विष्णुयामले रुद्रं प्रति श्रीकृष्णवाक्यम्—

जगन्नाथेति नाम्ना मे कीर्तयिष्यन्ति ये नराः ।
अपराधशतं तेषां क्षमिष्ये नात्र संशयः ॥ १०६ ॥

फडके कुलजातेन गोपालतनुजन्मना ।
विश्वेशचरणे पूर्तिरर्पितानन्तशास्त्रिणा ॥ १ ॥

---

पराद्धात्तु नामकीर्तनादेव तरतीत्यभिप्रायः । *कर्णमूलमिति* । कर्णविवराभ्यन्तरदेशमिति यावत् । *वेति* । अनेन पापदाहस्य साधनत्रयं प्रदर्शितम् । *शुद्धसत्त्वात्तदेहमिति* । शुद्धसत्त्वेन गुणेन, आत्तः-प्रापितो देहो यस्मादेवं भूतं जपकर्तारं कृत्वा, अनवद्यं-अनिन्दितं साक्षाद्ब्रह्म, संविधत्ते प्रापयतीति यावत् ।

ज्येष्ठस्य धवले पक्षे सप्तम्यां कुजवासरे ।
भ्यङ्काङ्कभूमिते वर्षे सुधा टीका समापिता ॥ १ ॥

## …थान्यत्रोपलब्धानां श्लोकस्थपाठभेदानां सङ्कलनम्।

| | पृष्ठाङ्कः, | श्लोकाङ्कः । |
|---|---|---|
| | ४७ | ३ |
| सुरापो ब्रह्महा स्तेयी | ५० | ८ |
| स्वनन्तफलदो मया | ५१ | ९ |
| विचित्रितपूर्वकायः | ५१ | ११ |
| कालोऽस्ति सज्जपे | ५२ | १४ |
| ये ते भागवताः | ५२ | १५ |
| अघच्छित्स्मरणं विष्णोः<br>ईशोऽहं सर्वजगतो } | ५२ | १६ |
| विष्णोर्हि जापकः | ५२ | १६ |
| हरेर्नाम गतिर्नृणाम् | ५६ | २५ |
| कृष्णं मां | ५८ | २८ |
| नित्ययुक्तस्य देहिनः<br>शत्रुकृतं भयम् } | ६१ | ४१ |
| नामानुकीर्तनात् | ६२ | ४७ |
| देहमिमं राजन् | ६४ | ५३ |
| सद्य एव महात्मनः | ६५ | ५७ |
| किमु भक्तितः<br>ग्रहणे खगस्य प्रयागगङ्गोदककल्पवासः } | ६८ | ७२ |
| गोविन्दकीर्त्या न<br>छिद्रं सम्मोहः स च विभ्रमः } | ६९ | ७३ |
| वासुदेवं न कीर्तयेत् | ६९ | ७६ |
| योऽनुकीर्तयते | ६९ | ७[illegible] |
| नारायणाख्यममृतं | ७९ | १८ |
| क्षपितकिल्विषः | ८० | १४ |

## पाठभेदसङ्कलनम् ।

| | पृष्ठाङ्कः, | श्लोकाङ्कः । |
|---|---|---|
| हरिरित्यवशेनाह | ९२ | २१८ |
| मुमुक्षतां तीर्थ | ९२ | २१९ |
| चार्यघातवान् | ९२ | २२० |
| परुषं वदन्तः | ९२ | २२७ |
| सपदि वै तु<br>वेदागमशास्त्रसारैः | ९४ | २२७ |
| वाञ्छसि मोक्षकामं | ९४ | २२८ |
| यद्भूतं यद्भविष्यति | ९४ | २२९ |
| गोविन्देति प्रजल्पताम् | ९६ | २४० |
| गच्छन्नाग्रहदंस्थितः | ९७ | २४६ |
| पापमत्याहं | ९७ | २४७ |
| स्वल्पमति वा स्थूलं | ९७ | २४९ |
| यथा परंब्रह्म यथा हरिस्तथा | ९८ | २५२ |
| घ्नन् ब्रह्मणमत्यन्तम् | १०६ | २८८ |
| हेलया कलिबन्धनुत् | १०७ | २९३ |
| गुरुदाराभिमर्षणम् | १०८ | २९६ |
| मृत्युसंसार<br>कायजं लोके | १०९ | ३०१ |
| सर्वं क्षययते | १०९ | ३०२ |
| महापापानि सर्वाणि | १०९ | ३०३ |
| धनागमम् | १०९ | ३०४ |
| तानि सर्वाणि झटिति नामोच्चारहरिर्हरेत् | ११० | ३०९ |
| स्तेयान्यसङ्ख्यातानि च पातकानि | १११ | ३१३ |
| तत्सर्वं विद्यते विप्र तन्मोक्तं रुद्रकीर्तने | १११ | ३१४ |
| नरमेधादिकैरपि | | |

| | पृष्ठाङ्कः, | श्लोकाङ्कः |
|---|---|---|
| वाजपेयशतानि च | ११२ | ३ |
| वसन्ति यानि पापानि कोऽस्यस्तु | ११३ | ३ |
| फलं चैव नियतं | ११४ | ३ |
| पातकानां च | ११५ | ३ |
| तदा सदा मनो नित्यं कुरु गोविन्दकीर्तने | ११५ | ३ |
| कृते गोविन्दकीर्तने | ११६ | ३ |
| तत्पापं याति गोविन्द गोविन्देति च कीर्तनात् | ११६ | ३ |
| अभक्ष्यसम्भवं पापं | ११६ | [illegible] |
| रामेति चानिशम् | ११६ | |
| इति मां त्वं समुद्धर | ११८ | |
| कीर्तयन्ति च नारकाः<br>तथा तथा हरेर्भक्तिम् | ११८ | |
| गोविन्देति जपन् जन्तु, | ११८ | |
| भवभीतितः | १२४ | |
| वह्निनेवेन्धनः शुचिः | १२४ | |
| न कलिर्बाधते हि तान् | १२६ | |
| विहरंश्च चर्दस्तथा | १२७ | |
| करोति सततं यस्तु | १२७ | |
| यं समभ्यर्च्य विप्रेन्द्राः | १२७ | |
| येऽनुकुर्वन्ति पातकम् | १२८ | |
| मद्भक्ताः सत्यमेतत्तु<br>मत्तुल्यो जायते | १२९ | |
| कीर्तितं येन महता | १३३ | |
| निवृत्ति चदुपेच्छता | १३४ | |
| नाम्नि संकीर्तिते हरेः | १३४ | |

| | पृष्ठाङ्कः, | श्लोकाङ्कः । |
|---|---|---|
| सततं द्विजेषु | १३४ | ४३६ |
| लब्ध्वा चोत्तमजन्मभोग- सायुज्यमायात्यपि | १३५ | ४४४ |
| विविधं विचित्रं | १३६ | ४४८ |
| संकीर्तितं विद्धि अतो | १३७ | ४४९ |
| हेयं नो ह्यौपधैरपि | १३७ | ४५० |
| न शौचाशौचनिर्णयः | १३९ | ४६२ |
| अनन्ताच्युत इत्येवं | १३९ | ४६४ |
| पृथिवीसस्यसम्पूर्णां दत्वा यत्फलं सकृत्तत्फलमाप्नुयात् | १४० | ४६७ |
| सायुज्यमिच्छति | १४० | ४६८ |
| आयुष्यं पापनाशनम् | १४३ | ४८२ |
| स च तस्माद्विमुच्यते | १४५ | ४९२ |
| तेऽपि यान्ति परां गतिम् | १४६ | ४९७ |
| सुरापायी च यो नरः | १४७ | ५०२ |

इत्यन्यत्रोपलब्धपाठभेदसङ्कलनम् ।



# अथ भगवन्नाममाहात्म्यसंग्रहस्थग्रन्थ-ग्रन्थकारनामविशेषस्थलोल्लेखसूचिका ।

ग्रन्थाद्युल्लेखसूचिका।

इति भगवन्नाममाहात्म्यसङ्ग्रहस्थग्रन्थग्रन्थकारनामविशेषस्थलो-
ल्लेखसूचिका ।

# अथ भगवन्नाममाहात्म्यसङ्ग्रहस्थश्रुत्याद्या-द्यचरणानामनुक्रमणिका ।

पृष्ठाङ्कः ।

| | पृष्ठाङ्कः । |
|---|---|

पृष्ठाङ्कः ।

पृष्ठाङ्कः ।

श्रुत्याद्याद्यचरणानुक्रमणिका ।

हत्वा ब्राह्मणवित्तानि
हृदयकमलमध्ये
हे जिह्वे मयि निःस्नेहे
हे जिह्वे रससारज्ञे

# भगवन्नाममाहात्म्यसङ्ग्रहशुद्धिपत्रम् ।

| पृष्ठम्, | पङ्क्तिः, | अशुद्धम्, | शुद्धम्, |
|---|---|---|---|
| १ | १६ | घारेषु | घोरेषु |
| २ | १४ | यवागं | यवागूं |
| ४ | १० | इतिहासो | इतिहासः |
| ६ | १३ | कौमुद्या | कौमुद्यां |
| ६ | १८ | तताऽसमाप्त | ततोऽसमाप्त |
| ७ | १६ | यस्माद् पुर्वैः | यस्माद् पूर्वैः |
| ९ | १२ | रुद्राधिभूम्याम् | रुद्रा अधिभूम्याम् |
| ११ | १ | जप्येनामृत्वं | जप्येनामृतत्वम् |
| १९ | ९ | क्षयन्त | क्षयन्तं |
| २० | १२ | मुमूर्पन् | मुमूर्षून् |
| २१ | ६ | विप्रासा | विप्रासो |
| २४ | ७ | पापत्तय | पापक्षय |
| २६ | ३ | स्तुत्यर्थं | स्तुत्यर्थत्वे |
| २७ | २३ | कस | कर्मस |
| २८ | १० | कञ्चकादिति | कञ्चुकादिति |
| २९ | १३ | वचनाक्तेषु | वचनोक्तेषु |
| ३० | २१ | गतिरति | गतिरिति |
| ३१ | २१ | भोदेव | भोगादेव |
| ३२ | १० | चोघारणेन | चोद्यारणे न |
| ३३ | १२ | पञ्चे | प्रपञ्चे |
| ३५ | २३ | सम्वाद | संवाद |
| ३६ | १० | प्रोक्तोनि | प्रोक्तानि |
| ३७ | १० | कर्मभिः | कर्मभिः |
| ३८ | २६ | याऽन्यथा | योऽन्यथा |

| पृष्ठम्, | पङ्क्तिः, | अशुद्धम्, | शुद्धम् । |
|---|---|---|---|
| ४० | १७ | विचारणो | विचारणा |
| ४० | २५ | श्राद्धादि | श्रद्धादि |
| ४१ | १२ | मन्याह्ला | मभ्याह्ला |
| ४२ | ६ | वाल्मिकिना | वाल्मीकिना |
| ४२ | ७ | व्युच्चरित | व्युच्चरिते |
| ४५ | १४ | दभिन्न | द्भिन्न |
| ४५ | १८ | विन्दोत | विन्देति |
| ४५ | १६ | शताधक | शताधिक |
| ४६ | ६ | च्चवन | च्यवन |
| ५० | १३ | लीनात्रा | लीनमत्र |
| ५१ | १५ | रोमाञ्चे | रोमाञ्चेति |
| ५६ | १४ | स्वार्थेऽण् | स्वार्थेऽण् |
| ६० | ६० | दशनाभाव | दर्शनाभाव |
| ६० | १० | नामाच्चरन् | नामोच्चरन् |
| ६० | २३ | पूजनात्त | पूजनात्तु |
| ६१ | ८ | स्मरन्ती | स्मरन्ति |
| ६५ | ४ | यावता | यावती |
| ७१ | १५ | शीव | शिव |
| ७१ | १६ | शीव | शिव |
| ८० | १९ | तीर्थपु | तीर्थेषु |
| ८८ | १० | तस्यान्तरयो | तस्यान्तरायो |
| ९० | ७ | | (अत्र प्रारम्भे) श्रीमद्भागवत (इति पठनीयम् । ) |
| ९१ | ५ | परिहास्यं | पारिहास्यं |
| ९१ | ७ | यद्क्षरं | यद्यक्षरं |

| पृष्ठम्, | पङ्क्तिः, | अशुद्धम्, | शुद्धम् । |
|---|---|---|---|
| १९ | ९ | किर्तिम | कितिंतम |
| ९३ | ४ | यद्ध्यायतो | यद्ध्यायतो |
| १०२ | १२ | वटपिनं | विटपिनं |
| १०८ | ८ | तमनन्तन | तमनन्तं न |
| १०९ | ७ | यानि महा | यानिपापानि महा |
| ११० | ९ | न्यसङ्ख्यातानि | न्यसङ्ख्यानि |
| १११ | १२ | यजितं | याजितं |
| ११६ | १२ | जप्यं | जप्तं |
| १२३ | ४ | ञ्छम्भो | ञ्छम्भो |
| १२९ | २१ | र्थऽपाणि | र्थऽपाणि |
| १३५ | २० | पञ्चापः | पञ्चोपः |
| १४५ | ७ | रीरिताः | रीरिता |
| १५६ | २२ | सहना | सहस्रना |
| १६१ | ५ | ह्यात्मत्म्यंया | माहात्म्यं मया |
| १६१ | ११ | पर्वाणि | पर्वणि |
| १६१ | १६ | पूण्यकर्मा | पुण्यकर्मा |
| १६१ | २० | तच्छ्रुत्वा | तच्छ्रुत्वा |
| १६२ | १८ | नामोघः | नामौघः |
| १६२ | २२ | भगन्व | भगवन्ना |
| १६३ | १० | व्यर्थतापतेः | व्यर्थतापत्तेः |
| १७१ | १ | सत्वशु | सत्त्वशु |
| १७२ | १९ | तीर्थरिति | तीर्थैरिति |
| १७३ | १४ | यस्मादेवं | यस्मादेवं |

इति भगवन्नामसङ्ग्रहशुद्धिपत्रम् ।

Edited with Introduction etc by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares Rs 1-0

No 23-The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmādhikārī

Ed with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares Rs. 2-0

No 24-The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana

Ed with Introduction etc by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M A., Principal, Government Sanskrit College, Benares Rs 3-12

No 25-The Sāpiṇḍyakalpalatikā (सापिण्ड्यकल्पलतिका) [धर्मशास्त्र], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva

Edited with Introduction etc by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt Sanskrit College, Benares Rs. 1-4

No 26-The Mṛgāṅkalekhā Nāṭikā (मृगाङ्कलेखानाटिका) [नाटिका], by Viśvanātha Deva Kavi.

Edited with Introduction etc by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst Librarian, Government Sanskrit Library, Benares Rs. 1-0

No. 27-The Vidvachcharita Pañchakam (विद्वच्चरितपञ्चकम्) [निबन्ध] By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, MA, Principal, Govt Sanskrit College, Benares Rs. 2-0.

No. 28–The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosinga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares With a Foreword by S'rī Gopinātha Kaviraja, M. A., Principal, Govt Sanskrit College, Benares. Rs. 4–0

No. 29–The Vṛitti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇa Bhatta.
Edited with Introduction etc by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt Sanskrit College, Benares. Rs. 1–2

No. 30–The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Veṇīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0–14

No. 31–( Part I)–The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pārth Sārathi Mis'ra.
Edited by M. M. Dr Ganganatha Jha, M. A, D. Litt, Vice-Chancellor, Allahabad University Allahabad. Rs. 114

No. 31–( Part II ) Ditto. Ditto
Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares. Rs. 2–4

No 32–The Tattvasāra ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.
Edited with Introduction etc by Harihara S'astri, Benares Hindu University. Rs. 1–0.

No. 33–( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.
Edited with Introduction etc by Umes'a Mis'ra, M. A., Allahabad University, Allahabad. Rs 3–4

No. 34–( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dīkṣita.
With a Commentary by S'rī Dharmayya Dīkṣita.
Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs 1–4

No 35–The Dhama Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla,

Edited with Introduction etc, by Pandit Nārāyana S'āstri Khiste, Asst Librarian, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 36-The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra
Edited, with a Foreword by Gopinath Kaviraj, M A, by Nanda Kishore Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 3-8

No 37-The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ], Edited with Introduction by Dr Mangaldeva S'āstri, M. A., D Phil. Rs. 1-0

No 38-The Kiranāvali prakās'a didhiti ( Guṇa ), ( किरणावली-प्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.
Edited by Pandit Badrināth Sāstri, M A, Lucknow University Rs. 1-12

No. 39-The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ] by Rupanātha
Edited by Pt Ganapatilal Jha, M A. Rs 2-0

No 40-(Part I) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopināthа Kaviraja M.A by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4-0

No. 40-( Part II ) Do Do Rs. 3-8

No 41-(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara
Edited with Introduction etc by Jyautiṣāchārya Pandit Murlidhara Ṭhakkura, late Sadholal Scholar, Sanskrit College, Benares Rs 3-0

No 42-The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Pañchānana Bhaṭṭāchārya
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College Benares, Rs. 1-12

No 43-( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ], by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedāchārya Pandit Bhagavat Prasad Misra, Professor, Govt. Sanskrit College, Benares. Rs. 1-8

No 44-( Part I ) S'ūdrāchāra S'iromani (शूद्राचारशिरोमणि) [धर्मशास्त्र], Edited by Sāhityāchārya Pandit Narayan S'astri Khiste Rs. 2-4

No 45-( Part I ) Kiranāvalī Prakāśa (Guna) (किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited, with a Foreword by Pt. Gopinath Kaviraj M., A., by Pandit Badrinath S'astri, M. A., Lucknow University. Rs. 1-8

No. 46-( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार], by S'rī Chandī Dāsa.
Edited by S'ivaprasāda Bhattāchārya, M. A., Professor, Presidency College, Calcutta. Rs 1-12

No 47-Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhatta Venīdattāchārya
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāthashalas, United Provinces, Benares Rs 1-4

No 48-Samyak Sambuddha bhāṣitam Buddhapratimālakṣanam ( सम्यक्संबुद्धभाषितं प्रतिमालक्षणम् ) [ शिल्पशास्त्र ],
With the Commentary Sambuddhabhāsita-pratimā lakṣana Vivaranī. Critically edited with Introduction etc by Haridās Mitra, M. A, Viśvabhārati, S'āntiniketana Rs 1-4

No 49-Bhedaratna ( भेदरत्न ) [ न्याय ] by Sankara Miśra
Edited with Introduction etc, by Pandit Sūryanārāyana S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1-8

No. 50-Mātrikā Chakra Viveka ( मातृकाचक्रविवेक ) [ तन्त्र ], by Svatantrānanda Nātha, with a Commentary.
Edited by Pandit Lalita Prasad Dabral Vyākaranāchārya.

With a Foreword by Pt. Gopināth Kaviraj, M A., Principal Govt. Sanskrit College, Benares.

No 51-52 Advaita Siddhānta Vidyotana(अद्वैतसिद्धान्तविद्योतन) [वेदान्त] by Brahmānanda Sarasvati

and

Nrisimha Vijnāpana (नृसिंहविज्ञापन) [वेदान्त], by Nrisimhāśrama Edited with notes, Introduction etc. by Pandit Sūrya Nārāyana S'ukla, Professor, Govt, Sanskrit College, Benares

No 53-Nrisimha Prasāda-Vyavaharsāra (नृसिंहप्रसाद-व्यवहारसार) [धर्मशास्त्र], by Dalapati Rāja.
Edited with Introduction etc by Pandit Vināyaka S'āstri Tillu, Research Scholar, Sanskrit College, Benares.

No 54-Nrisimha Prasāda-Prāyaśchitta Sāra (नृसिंहप्रसाद प्रायश्चित्तसार) [धर्मशास्त्र], by Sri Dalapati Rāja
Edited by Pandit Nanda Kishore Sharma and Nanda Kumar Sharma Sahityacharya

No. 55-Nrisimha Prasāda-S'rādha Sāra (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र],
Edited by Pandit Vidyadhara Miśra, College of Oriental Learning, Benares Hindu University, Benares.

## Works in the press

No 1. Dakṣiṇāmūrti Samhitā (दक्षिणामूर्तिसंहिता) [तन्त्र],
Edited by Pt. Nārāyna S'āstri Khiste.

No 2 Ās'valāyana S'rauta Sūtra with Sidhhānti Bhāshya (सिद्धान्तिभाष्यसहित आश्वलायनश्रौतसूत्र) [वेद],
Edited by Dr. M. D. S'āstri, M. A., D. Phil

No. 3. Niti mañjari (नीतिमञ्जरी) [वेद], by Dyā Dvivedi
Edited by D. Mangal deva Sastri. M. A., D. Phil.

No. 4. Nyāya Kaustubha ( Part II ) Anumānakhanda (न्यायकौस्तुभ-अनुमानखण्ड) [न्याय], by Mahādova Puntamkar.
Edited by Pt Goswami Dāmodara S'āstri

No 5. Mīmānsā Chandrikā ( मीमांसाचन्द्रिका ) [ मीमांसा ], by Brahmānanda Sarsvati.
Edited by Pt, Haran Chandra Bhaṭṭāchārya S'āstri.

No 6. Ganita Kaumudī (गणित कौमुदी) [गणित], by Nārāyana Pandit
Edited by Pt. Padmakar Dvivedi

No. 7. Kiranāvali prakāsa, (Part II) ( किरणावली प्रकाश ) [वैशेषिक], by Vardhamāna Upādhyāya.
Edited by Pt. Badrināth S'āstri, M A.

No 8. Tantraratna (Part III) (तन्त्ररत्न) [ मीमांसा ], by Partha Sārathi
Edited by Pt Gopal Sāstri Nene,

No 9 S'ūdrāchāra S'iromani (Part II) (शूद्राचारशिरोमणि) [धर्मशास्त्र] by S'esa Krsna.
Edited by Pt. Nārāyana S'āstri Khiste.

No 10. Kāvya prakāsa dīpikā ( Part II ) ( काव्यप्रकाशदीपिका ) [ अलङ्कार ], by S'ri Chandīdāsa
Edited by Pt. S'ivaprasāda Bhattāchārya, M. A.

No 11. Smārtollasa (Pa tII) (स्मार्तोल्लास) [कर्मकाण्ड], by Siva prasada
Edited by P. Bhagavata prasād Misra.

No. 12. Bhagavan nāma māhātmya Samgraha ( भगवन्नाममाहात्म्य-संग्रह ) [ भक्तिशास्त्र ], by Raghunāthendra Yati, with com by Ananta S'āstri Phadke.
Edited by Pt. Ananta Sāstri Phadke,

No. 13 Kālatattvavivechna ( कालतत्त्वविवेचन ) [ धर्मशास्त्र ], by Raghunātha Bhatta. Part III.
Edited by Pt. Nanda kishore Sharma,

No 14. Siddhānta Sārvabhauma ( सिद्धान्तसार्वभौम ) [ ज्योतिष ], by Munīs'vara. Part-II.
Edited by Pt. Murlidhar Thakkur

Vol. IV—

(a) Studies in Hindu Law (4). Judicial Procedure by Gaṅgā nātha Jha
(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj
(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Mangala Deva S'āstrī
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi
(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy
(f) Satkāryavāda Causality in Sāṅkhya, by Gopinatha Kaviraj
(g) Discipline by Consequences, by G L Sinha.
(h) History of the origin and expension of the Aryans by A C Ganguly
(i) Punishments in Ancient Indian Schools, by G L Sinha Rs 5

Vol V—

(a) Ancient Home of the Aryans and their migration to India by A C Ganguly
(b) A Satrap Coin, by Shyamalal Mehr
(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayana, by Manmatha nātha Roy
(d) A Comparison of the Contents of the Rgveda, Vajasaneya, Tattirīya & Atharvaveda Prātiśākhyas, by Mangala Deva S'āstri
(e) Formal Training and the Ancient Indian Thought, by G L Sinha
(f) History and Bibliography of Nyāya Vais'osika Literature, by Gopinath Kavirāj
(g) A Descriptive Index to the names in the Rāmāyana, by Manmatha nātha Roy
(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj Rs 5

Vol VI—

(a) Index to S'abara's Bhāṣya, by the late Col G A Jacob
(b) Some Aspects of the History and Doctrines of the Nāthās, by Gopinath Kaviraj
(c) An Index etc the Ramayana, by Manmatha nātha Roy
(d) Studies in Hindu Law by M M Ganganatha Jha
(e) The Mimamsa manuscripts in the Govt Sanskrit Library (Benares), by Gopināthā Kavirāj
(f) Notes and Queries, by Gopināthā Kavirāj

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkār, by Baṭukanātha S'armā and Baladeva Upādhyāya

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj

(c) History and Bibliography of Nyāya Vais'esika Literature, by Gopinātha Kavirāj

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi

(e) A comparison of the contents of the Rig Veda, Vajasaneya Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri

(f) An Index to the Ramayana, by Manmatha Nātha Roy

(g) An Index to Sabrar's Bhāṣya, by the late Col J A Jacob

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra. Rs. 5

Vol VIII

(a) Indian Philosophy, by Tarakanatha Sanyal

(b) An Index to the Rāmāyana, by Manmatha Nath Roy

(c) Index to Sabara's Bhāṣya, by the late Col J A. Jacob

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Rigveda, by Mangaladeva Sāstri

(e) Mysticism in Veda, by Gopināth Kavirāj

(f) The Devi disha brief history of the Institution, by Manmath Nātha Roy

Vol. IX (In press) Rs 5

(a) The Life of a Yogin, by Gopināth Kavirāj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M A

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste

(b) Mimansaka mata samgraha, by Haranchandra Bhaṭṭācha[r]

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'ast[ri]

(d) Bhagavato Buddhasya Charitam Upades'as'cha, by Gopinatha Kaviraj

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sha[rma]

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārāyāna S'āstri Khiste.

(b) Chūdāmani Dars'anam by S'as'adhara Tarkachūdāmaṇi

To be had of

The Superintendent

Government Press, U.

Allaha[bad]